सर्पा(र्पो)नुराधा हृदि भूषणेन्द्रः
शि(शं)खाभमूलं गजयुद्धकं द्वौ ।
विष्णुः शराभं पणवं धनिष्ठा
शतं शताख्या अथ भाद्रवौ च ॥ ३२ ॥

पर्यङ्कमास्यं झषमन्त्यभं च
[1]भानां बुधैराहुरिति स्वरूपम् ।
एतानि [2]चिन्त्यं निशि कालजानां
बोध्यो विलग्नस्य च निर्णयोऽपि ॥ ३३ ॥

---

१. अत्र श्रीपतिः

" तुरगमुखसदृक्षं योनिरूपं क्षुराभं शकटनिभमथैणस्योत्तमाङ्गेन तुल्यम् ।
मणिगृहशरचक्राभानि शालोपमं च शयनसदृशमन्यच्चात्र पर्यङ्करूपम् ॥
हस्ताकारमजस्रमौक्तिकसमं चान्यत्प्रवालोपमं
धिष्ण्यं तोरणवत्स्थितं बलिनिभं स्यात्कुण्डलाभं परम् ।
क्रुध्यत्केसरिविक्रमेण सदृशं शय्यासमानं परं
चान्यद्दन्तिविलासवत्स्थितमतः श्रृङ्गाटकव्यक्ति च ।
त्रिविक्रमाभं च मृदङ्गरूपं वृत्तं ततोन्यद्यमलद्वयाभम् ॥
पर्यङ्कतुल्यं मुरजानुकारमित्येवमश्व्यादिभचक्ररूपम् " इति ।
सिद्धान्तदर्पणे च

" तुरगवदनत्रिकोणज्वलनशि-खानसदृक्षास्ताः ।
मार्जारपादविद्रुमकार्मुककठिनिरजःश्वपुच्छनिभाः ॥
लाङ्गूलभारसमाभे भास्कराभे च मुक्ताभा ।
माणिक्यतोरणफणिक्रोडरदकम्बुशूर्पसदृशतनवः ॥
सूर्याग्निर्बिंबसायकमुरजवितानप्रतीकाशाः ।
भारनिभा भारसमा मीनाभा चेति संमता उडवः" ॥ इत्युक्तम् ॥

२. चिन्त्यानि निशाभवानां इति पाठः साधुः ।

## नक्षत्रतारासंख्या

[1]शिखि३गुण३रसे६न्द्रिया५नल३-
शशि१गुण३विषय५र्तु६पञ्च५यम२पक्षाः २ ।
विषयै५क१चन्द्र१भूता५ नवा९ग्नि३-
रुद्रा११श्वि२वसु८दहनाः३ ॥ ३४ ॥

भूत५शत१००पक्ष२वसवो८ द्वात्रिंशच्चे३२त्ता(ति ता)रकामानम् ।
क्रमशोऽश्विन्यादीनां कालता(स्ता)राप्रमाणेन ॥ ३५ ॥

## नक्षत्राणां दिग्ज्ञानम्

[2]अश्विनी भरणी स्वाती विशाखा फाल्गुनी तथा(मखा) ।
पूर्वभाद्रपदायुग्मं नव उत्तरचारिणः ॥ ३६ ॥

कृत्तिका रोहिणी पुष्या(ष्यं) चित्ता(त्रा)ऽश्लेषा च रेवती ।
शतश्रवण(श्रुती) धनिष्ठा च नव मध्यप्रचारिणः ॥ ३७ ॥

पुनर्वसुर्मृगश्चार्द्रा ज्येष्ठा मैत्र(त्रं) करस्तथा ।
पूर्वाषाढोत्तराषाढा मूला दक्षिणचारिणः ॥ ३८ ॥

---

१. अत्र अश्विन्यादीनां नक्षत्राणां तारासंख्या कथिता। अत्र श्रीपतिसिद्धान्तदर्पणयोर्मत-भेदो दृश्यते। यथा अस्मिन् ग्रन्थे अश्विन्यादीनां क्रमेण संख्या ।

३. ३. ६. ५. ३. १. ३. ५. ६. ५. २. २. ५. १. १. ५. ९. ३. ११. २. ८. ३. ५. १००. २. ८. ३२ इति ।

श्रीपतिमते अश्विन्यादीनां तारासंख्या ।

३. ३. ६. ५. ३. १. ४. ३. ५. ५. २. २. ५. १. १. ४. ३. ३. ११. ४. ३. ३. ४. १००. २. २. ३२ इति ।

सिद्धान्तदर्पणे अश्विन्यादीनां साभिजितां तारासंख्या ।

३. ३. ६. ५. ३. १. ५. ३. ५. ५. २. २. ५. १. १. ५. ७. ३. ९. ४. ४. ३. ३. ५. १००. २. २. ३२ इति

२. अत्र सूर्यसिद्धान्तादिभिर्मतभेदो दृश्यते ।
तथा चोक्तं सिद्धान्तशिरोमणौ " त्रयं ब्रह्मधिष्ण्याद्विशाखादिषट्कम् ।
करो वारुणं त्वाष्ट्रभं सार्पमेषां शरा दक्षिणा उत्तराः शेषभानाम् " इति ॥

### मूर्धगतनक्षत्रवशात् रात्रिगतज्ञानम्

रैविस्थितर्क्षस्य च शेषकांशं(शा)
लिप्तीकृतं(ताः) खङ्क(खाङ्ग)कृशानु३६०भक्तम्(क्ताः) ।
रविस्थ(स्थि)तर्क्षस्य च नाडिका स्यात्
प्रसाधयेद्धानुभतस्परर्क्षात् ॥ ३९ ॥

### अत्रैव प्रकारान्तरम्

गैगनमध्यगतो(ते) रविभाजित(दितो)
उडुगणे गणनं तुरगो७ज्झितम् ।

---

१. एकैकस्य नक्षत्रस्य मध्यमभोग: १३ भागा: २० कला: अथवा ८०० कला: रवि: यस्मिन्नक्षत्रे वर्तते तत्र गतभागान् कलाश्च विशोध्य शेषांशा: षष्टिहता: शेषलिप्ता-युता: रविस्थितनक्षत्रभोग्यकला भवन्ति। एता: क्रान्तिवृत्तगता:। क्रान्तिवृत्तं २१६०० कलाङ्कितं नाडीषष्ट्या भ्रमति। अतोऽनुपात: यदि २१६०० कलाभि: ६० घट्यो लभ्यन्ते तदा रविस्थितनक्षत्रभोग्यकलाभि: किमिति। लब्धा रविस्थित-नक्षत्रे भोग्यकलासंबन्धिनी नाडी भवति। अत्र गुण: ६०। हर: २१६००। इमौ षष्ट्या अपवर्तितौ तदा गुण: १। हर: ३६०। अत: रविस्थितर्क्षस्य शेषकांशा: लिप्तीकृता: खाङ्गकृशानुभक्ता: रविस्थितर्क्षस्य एष्यनाडिका स्यादित्युक्तं उपपन्नम्। अथ क्रान्तिवृत्ते पश्चिमत: पूर्वदिगाभिमुख्येन मेषादीनि नक्षत्राणि क्रमेणाङ्कितानि। अत: खमध्यगतान्नक्षत्रात् पश्चिमदिशि सूर्याक्रान्तं नक्षत्रं यावत् रविभोग्यनक्षत्राण्येव भवेयु:। अत: रविस्थितनक्षत्रात् खमध्ये स्थितनक्षत्रपर्यन्तं भोग्यनक्षत्रसंख्या नक्षत्रभोगकलाभि: ८०० गुणिता ३६० भक्ता भोग्यनक्षत्रसंबन्धिन्यो नाड्यो भवेयु:। ता: रविस्थितनक्षत्रसंबन्धिन्या भोग्यनाड्या युता: खमध्यात् रव्याक्रान्तक्रान्तिवृत्त-भागपर्यन्तं भोग्यनाड्यो भवन्ति। ता: दिनार्धेन हीना रात्रिगतनाड्यो भवन्ति॥

२. पूर्वोक्तं कालसाधनं सूक्ष्मम्। इदानीं स्थूलमाह। रविस्थितनक्षत्रात् खमध्यगतनक्षत्रं यावत् रविभोग्यनक्षत्रसंख्या सप्तभिर्हीना कार्या। लब्धानि अस्तक्षितिजात् रविस्थितनक्षत्रपर्यन्तं रविभोग्यनक्षत्राणि भवन्ति। अस्तक्षितिजात् पूर्वक्षिति-जपर्यन्तं क्रान्तिवृत्ते चतुर्दश नक्षत्राणि भवन्ति। तेषां भोगकाल: रात्रिमानम्। अतोऽनुपात: यदि चतुर्दशभिर्नक्षत्रै: रात्रिमानं लभ्यते तदा अस्तक्षितिजात् रविस्थितनक्षत्रपर्यन्तै: रविभोग्यनक्षत्रै: किमिति। लब्धा रात्रिगतघट्य:॥ ४०॥ अथ वा सप्तविंशतिभिर्नक्षत्रै: षष्टिघट्यो लभ्यन्ते तदा अस्तक्षितिजात् रविस्थि-तनक्षत्रपर्यन्तं रविभोग्यनक्षत्रै: किमित्यनुपाते गुण: ६०, हर: २७. एतौ त्रिभि-रपवर्तितौ गुण: २०. हर: ९. अत: नखघ्नं इत्यादिकमुपपन्नम्॥ ४१॥

निशिमानहृतं मनुना१४ हृतं
भवति लब्धघटी निशिसंख्यया ॥ ४० ॥

### पुनरपि प्रकारान्तरम्

अन्यच्च —

सूर्प(सूर्य)भाद्गणनं मध्येनक्षत्रं मुनि७वर्जितम् ।
नख२०घ्नं नवभि९र्भक्तं रात्रिदण्डप्रमाणकम् ॥ ४१[1] ॥

### खमध्यगतनक्षत्रात् लग्नज्ञानम्

लिप्ता मध्यगते क्रियाद्गजनगौ विष्णौ रसाहो धने
षण्डाद्बाणघने शते द्विरददृङ्नेत्राणि पूर्वे ततः ।
द्वन्द्वादुत्तरभे करावनिधरौ पौष्णे रसाश्रानलाः
कर्केरम्बरखेचरौ तुरगभे पञ्चाक्षिपक्षा यमे ॥ ४२ ॥
सिंहात्सागरदन्तिनौ च दहने दन्तीन्दुपक्षाब्जजे
नार्या बाहुगुणे विधौ ग्रहदिने शीतांशुचूडो(डे) धटात् ।
दृग्रामावदितौ यमाद्रिवसुधा पुष्येऽब्धिखाक्षि(क्षी)ण्यदो
कीटात्खाम्बरभूमयश्च पितृभे नागाङ्गहस्ता भगे ॥ ४३ ॥
चापात्षट्कतरूत्तरे शरमहीनेत्राणि हस्ते मृगात्
व्योम त्वष्टरि कार्मुकाङ्कवसुधा वाते घटास्रट्करौ ।
शक्राग्नावथ मित्रभे गुणरवी शक्रेऽश्विकालेन्दवो
मीनान्मूल इभो जले नवदिशो विश्वेऽङ्गबाणेन्दवः ॥ ४४ ॥
प्रश्ननाड्यां हि लग्नानि यानि मध्यगतोडुनि ।
लग्नभा(भो)ग्यानि दण्डानि योजयेदिष्टदण्डकम् ॥ ४५ ॥

### लग्नमहत्वं

लग्नमूलं(लाः) क्रियास्सर्वे(र्वा) लग्नमूलं हि जातकम् ।
लग्नं विना फलं व्यर्थं शिलायामुप्तबीजवत् ॥ ४६ ॥

---

१. श्रवणनक्षत्रमारभ्योत्तराषाढानक्षत्रपर्यन्तं खमध्यगतेषु सप्तविंशतिनक्षत्रेषु मेषादिलग्नगतभागाः कलाश्च त्रिषु श्लोकेषूच्यन्ते ।

### लग्नत्रैविध्यम्

लग्नं तु त्रिविधं प्रोक्तं निषेकाधानजन्मतः ।

### जन्मत्रैविध्यम्

जन्म तु त्रिविधं शीर्षं(र्ष)नाभिपादोदयानि च( भिधम् ) ॥ ४७ ॥

### त्रिविधलग्नचिन्तनीयम

निषेके पुत्रजननं चाधाने गर्भसंस्थितिः ।
जन्मलग्ने फलं सर्वं रिष्टभावादिकं तु यत् ॥ ४८ ॥

उत्तमं शीर्षजं लग्नं मध्यमं नाभिजं स्मृतम् ।
पादजं लग्नमधमं तत्र शीर्षं समाश्रयेत् ॥ ४९ ॥

### स्पष्टलग्नसाधनम्

तत्कालिकोऽर्कोऽप्ययनांशयुक्तः
तैर्द्भोग्यभागैरुदयैर्हितश्च ।
खैाऽध्याहृतं तं रविभोग्यकालं
विशोधयेदिष्टख(घ)टीपलेभ्यः ॥ ५० ॥

---

१. तद्भोग्यभागैरुदयो हतः स्वः इति पाठः साधुः ।

२. खाग्न्याहृतात्तं इति पाठः साधुः ।
यस्मिन् काले लग्नं साध्यं तस्मिन् काले स्पष्टाधिकारोक्तगणितेन साधितःसूर्यः सायनांशः कार्यः । तेनार्केण युतस्य राशेर्ये भोग्यभागास्तैस्तस्य राशेः स्वदेशसिद्धान्युदयघटीपलानि गुण्यानि त्रिंशता भाज्यानि । लब्धः तस्मिन् राशौ रविणा भोग्यः कालः घटीपलात्मकः । तं इष्टघटीपलेभ्यः शोधयेत् । तदग्रतो यावन्तः राश्युदया घटीपलात्मकाः शुध्यन्ति तावतः शोधयेत् । शेषं त्रिंशता हत्वा शुद्धराश्यग्रगतस्याशुद्धस्य राशेरुदयमानेन स्वदेशसिद्धेन घटीपलात्मकेन विभजेत् । फलं अशुद्धराशौ सायनलग्नेन भुक्तं भागकलादिकं । तस्मिन् मेषादितो वर्ती शुद्धानां राशीनां संख्या सा राशिस्थाने योज्या । लब्धं मेषादितो गतं सायन लग्नं राशिभागकलाविकलात्मकं भवति । अस्मात् अयनांशाः शोध्याः । तदा निरयणं लग्नं सिद्धं भवति । अत्रोदाहरणं–इष्टघटी १८।३०, तात्कालिकोर्कः ८—१०°—८—८, अयनांशाः ०—२३°—८—५२ । अत्रोदाहरणे तात्कालिकार्के ८–१०°–८–८ अयनांशानां

तदग्रतो राश्युदयांश(श्च) शेष-
मशुद्धहृत्खाग्निगुणं लवाद्यम् ।
अशुद्धपूर्वैर्भवनैरजाद्यैः
युक्तं तनुः स्यादयनांशहीनैः(नम्) ॥ ५१ ॥

## अत्रैव ग्रन्थान्तरम्

तत्कालेऽप्ययनांशयुक्तसविता यस्मिन् गृहे वर्तते
तद्भागा(द्भोग्यां)शकसंख्यकैस्तु हृ(स्तदु)दयं हन्याच्चतुष्फालकैः
(स्वदेशोद्भवम्) ।
त्रिंशल्लब्धघटीर्विशोध्य कृतिभिश्चेष्टाक्ष(सु)दण्डात्तत-
स्तस्मादुत्तरतोऽयमेव(र्कभोग्य)भगणान् शोध्यात्व(न्प)रं शोधयेत् ॥
शेषं षष्टिहृ(हृ)तं खवह्निगुणितं चाशुद्धलग्नाप्तकं
लब्धेऽज्या(जा)दिगृहान्नियोज्य मतिमान् संशोधयेदायनम् ॥ ५२ ॥

## पुनरपि ग्रन्थान्तरम्

तात्कालिकार्कभोग्यांशैर्गुणयेत्तच्छु(त्स्व)भोदये(यं) ।
खगुणै(३०)राप्तनाड्यादीनिष्टनाड्या विशोधयेत् ॥ ५३ ॥

---

०—२३°—८—५२ योगे सायनार्कः ९–३°–१७ मकरराशिगतः। तस्य भुक्ता भागाः३°—१७ एते त्रिंशता शोधिताः २६°—४३ भोग्या भागाः। एते मकरराशिमानेन ३१४ पलात्मकेन गुणिताः त्रिंशताः भक्ताः। लब्धानि २८० पलानि। एतानि इष्टघटीतः १८—३० शोधितानि। अत्र शिष्टघटीपलेभ्यः १३–५० क्रमेण मकरराशेरग्रभवानां कुंभमीनमेषानां मानानि ४—३८, ४—१२. ४—१२. शोधितानि। शेषं ०—४८ त्रिंशता गुणितं अशुद्धराशेर्वृषभस्य मानेन २७८ पलात्मकेन भक्तं चेत् फलं ५°—१०—४८ भागात्मकं। मेषादितो गतराशिसंख्या १। तस्यां योजितायां सायनं लग्नम् १—५°—१०—४८। अस्मात् अयनांशेषु २३°—८—५२ शोधितेषु लब्धम् ०—१२°—१—५६ निरयणं लग्नं राश्यादिकम् ॥ ५०—५२ ॥

क्रमेण शेषलग्नानि प्रविशोध्यानि शेषकम् ।
अभ्रवैश्वानरा(३०)भ्यस्तमशुद्धोदयभाजितम् ॥ ५४ ॥
लब्धांशादौ युते सूर्ये प्रविशुद्धोदयान्विते ।
राशिभागकलारूपं लग्नं स्फुटतरं भवेत् ॥ ५५ ॥

### लग्नानयने विशेषः

[1]भोग्यत्वन्ये(तोऽल्पे)ष्टकालात्खरामाहता
त्सो(त्स्वो)दयाप्तांशयुग्भास्कर(रः) स्यात्तनुम् (नुः) ।

### लग्नात् इष्टकालानयनम्

अर्कभोग्यस्तनुभुक्ति(र्नोर्भुक्त)कालान्वितो
युक्तमध्योदयेऽपी(योऽभी)ष्टकालो भवेत् ॥ ५६ ॥

### लग्नानयने ग्रन्थान्तरम्

इष्टांशकोऽल्पो(सवोऽल्पा) यदि भोग्यकालाः(लात्)
त्रिंशद्गुणाः सो(स्वो)दयभाजितास्ते ।
लब्धांशयुक्तो रविरेव लग्नं
प्रसाधयेत्षड्युतमस्तलग्नम् ॥ ५७ ॥

### तात्कालिकसूर्यसाधनम्

गतैष्यसन्ध्ययोरंशैस्ताडयेदिष्टदण्डकम् ।
खर(रा)मैर्लब्धलिप्तादियुतस्तात्कालिको रविः ॥ ५८ ॥

---

१. १ रवियुक्तराशौ भोग्यकालात् इष्टकालस्य न्यूनत्वे पूर्वोक्तरीत्या लग्नानयनं न संभवति। अतः प्रकारान्तरमाह भोग्यत इति। इष्टासवः त्रिंशता गुणिताः सायनरवियुक्तराशिमानासुभिर्भक्ताः कार्याः। फलं भागादिकं स्पष्टरवौ योज्यम्। फलं सायनं स्पष्टलग्नम्। शेषं पूर्ववत्। इदानीं लग्नात् पूर्वोक्तवैलोम्येन इष्टकालसाधनमाह अर्कभोग्य इति। पूर्वोक्तरीत्या साधितः रवियुक्तराशौ रवेः भोग्यः कालः लग्नभुक्तकालः, रविलग्नान्तरवर्तिराशिमानकालश्चेत्येषां योगः इष्टकालो भवेदिति भावः॥५६॥

२. इष्टदिने उदयास्तकालयोः सूर्यं प्रसाध्य तदन्तरेण दिनगतनाडीः हत्वा त्रिंशता विभजेत्। रात्रौ इष्टकाले तु इष्टकालात्पूर्वतने अस्तकाले इष्टकालात् अग्रभवे उदयकाले च सूर्यं प्रसाध्य तदन्तरेण रात्रिगतनाडीः हत्वा त्रिंशता विभजेत्। एवं

## ॥ नीलाद्रौ लग्नमानम् ॥

[1]रामो(३)ऽब्धिबाणै(५४)र्जलधि(४)स्त्रियुग्मै(२३)
बाणो(५)ऽष्टभिः(८) पञ्च(५) गजानलै(लै)श्च(३८) ।
पञ्चे(५)षुरामै(३५)र्विषयो(५)ऽश्वियुग्मैः(२२)
क्रमोत्क्रमान्मेषतुलादिमानम् ॥ ५९ ॥

### षड्वर्गस्वरूपकथनम्

त्रिंशद्भागात्मकं लग्नं होरा तस्यार्धमुच्यते ।
तस्य त्रिभागो द्रेक्काणो नवभागो नवांशकः ॥ ६० ॥
द्वादशांशो द्वादशांशस्त्र्यं(त्रिं)शांशास्त्रिंशदंशकः ।
व्यवस्थाः कथिताः [2]सर्वे मुनयो वर्गचिन्तनात् ॥ ६१ ॥

### षड्वर्गसाधनम्

[3]होरा यम(२)घ्ना त्रि(३)गुणा दृक्काणा
गो(९)घ्ना नवांशा गृहहार(३०)लब्धाः ।
[4]स्वद्वादशांशापि च सूर्य(१२)निघ्ना-
स्त्रिंशांशकाः खाग्नि(३०)गुणास्तु शेषाः ॥ ६२ ॥

---

दिनगतनाडीलब्धं लिप्तादिफलं इष्टदिनौदयिके सूर्ये रात्रिगतनाडीलब्धं फलं इष्टदिनास्तसूर्ये योज्यम् । लब्धिः तात्कालिकसूर्यात्मिका भवति ॥ ५९ ॥

१. मेषमीनयोः ३-५४ वृषभकुंभयोः ४-२३ मिथुनमकरयोः ५-८ कर्कटधनुषोः ५-३८ सिंहवृश्चिकयोः ५-३५ कन्यातुलयोः ५-२२ घटीपलात्मकानि राशिमानानि नीलाद्रौ ग्रन्थनिर्माणदेशे भवन्ति । एतानि च देशभेदेन भिन्नानि । अनेन राशिमानेन गणितरीत्या एकविंशत्यक्षांशदेशे ग्रन्थनिर्माणमिति ज्ञायते ।

२. सर्वैर्मुनिभिर्वर्ग इति पाठः साधुः ।

३. लग्ने भुक्ताः भागाः द्विघ्नाः । गृहहारेण त्रिंशता भक्ताः कार्याः । लब्धिः गता होरा । शेषांशाः वर्तमानहोरायां गताः । एवं लग्नभुक्तभागाः क्रमेण त्रिभिः नवभिः द्वादशभिश्च त्रिंशद्भिश्च चतुर्षु स्थानेषु गुणिताः त्रिंशता भक्ताः क्रमेण द्रेक्काणाः नवांशाः द्वादशांशाः त्रिंशांशाश्च भवन्ति ।

४. स्युर्द्वादशांशा अपि इति पाठः साधुः ।

राशिनवांशयोरधिपाः

भौमः कविज्ञेन्दुरविज्ञशुक्राः
वक्रेज्यमन्दार्कसुतामरेज्याः ।
मेषादिभानामधिपाः क्रमेण
तदंशकानामपि ते भवेयुः ॥ ६३ ॥

होराधिपः

होरा राश्यर्धमित्युक्तं लग्नं(ग्ने) विषमराशिषु ।
रविचन्द्रौ प्रतिज्ञेयौ समेष्विन्दुदिवाकरौ ॥ ६४ ॥

द्रेकाणाधिपः

राशित्रिभागो द्रेकाणः तदीश(शा) भत्रिकोणपाः ।

नवांशराशयः

अजान्मृगाच्च घटजा(भा)त्कर्कटाच्च नवांशकाः ॥ ६५ ॥

चरां(रेंऽ)शकानामधिपास्तदीशा-
द्राशौ स्थिरे तन्नवमेश्वरात्तु ।
द्विदेहभे तत्सुतराशिनाथा(त्)
वदन्ति शास्त्रार्थविदो महान्तः ॥ ६६ ॥

द्वादशांशाधिपाः

तत्तद्राश्यादिराशीशा द्वादशांशाधिपाः क्रमात् ।

सप्तांशाधिपाः

ओजे तदीशास्स(त्स)प्तांशा युग्मे सप्त स(म)राशितः ॥ ६७ ॥

त्रिंशांशाधिपाः

पञ्चेष्वष्टाद्रिपञ्चानां त्रिंशांशानामधीश्वराः ।
भौमार्क्या(र्की)ज्यज्ञशुक्राः स्युः क्रमादोन्ते(जे)ऽन्यथा युजि ॥ ६८ ॥

## ॥ द्वादश भावाः ॥

देहं द्रव्यपराक्रमौ सुखसुतौ शत्रुः कलत्रं मृतिः
भाग्यं राज्यपदं क्रमेण गदिता लाभव्ययौ लग्नतः ।
भावा द्वादश तत्र सौख्यशरणं देहं मतं देहिनां
तस्मादेव शुभाशुभाख्यफलदः कार्यो बुधैर्निर्णयः ॥ ६९ ॥

### लग्नात् मूर्धाद्यङ्गविभागः

लग्नादेव शिरो मुखाक्षिरद(स)नं वाहुः(हु)श्रवःकण्ठकं
हृत्कुक्षी कटिमूर्धजो(पुम्ध्वजौ) गुदमुरुर्जानुश्च जङ्घः(ङ्घे) पदम् ।

### तत्फलम्

लग्नाद्यत्र तु पापखेचरयुतिर्ज्ञेया तदङ्गे क्षतिः

### सव्यापसव्याङ्गविभागः

लग्नाद्व्युत्क्रमतः क्रमेण गणना सव्यापसव्याङ्ककः(योः) ॥ ७० ॥

### मूर्धाद्यङ्गविभागे प्रकारान्तरम्

अन्यच्च—

मूध्नी(र्धा) लोचनकर्णकण्ठवदनं(गन्धवहनं) गण्डो हनुश्चाननं
ग्रीवा स्कन्धभुजं च पार्श्वहृदयं क्रोडं च नाभिः पुनः ।
वस्तिर्लिङ्गगुदं च मुष्कयुगलं चोरुद्वयं जानुनी
जङ्घा पादयुगं विलग्नभवनात्पार्श्वद्वये कल्पिता(ताः) ॥ ७१ ॥

## ॥ केन्द्रराशयः ॥

लग्नं तूर्णं(तुर्यं) कलत्रं च दशमं केन्द्र उच्यते ।
ततश्चतुष्टयं चैव कण्ठ(ण्ट)काख्यं वदेत्पुनः ॥ ७२ ॥

### केन्द्रबलम्

लग्ने पादबलं ज्ञेयं द्विपादं तुर्यभे तथा ।
त्रिपादं मदनस्थाने संपूर्णं दशमे गृहे ॥ ७३ ॥

### पणफरापोक्लिमराशयः

ततः पणपरं(रान्) विन्द्याद्धनलाभसुताष्टमः(मान्) ।
रिप्फं तृतीयं षष्ठं च नवमा(न्दश्चा)पोक्लिमः स्मृतः ॥ ७४ ॥

### त्रिकोणचतुरस्रराशयः

पञ्चमं नवमं चैव त्रिकोणं समुदाहृतम् ।
चतुर्थमष्टमं चैव चतुरश्रं विदुर्बुधाः ॥ ७५ ॥

### ॥ लग्नादिसंज्ञा ॥

लग्नं मूर्तित(स्त)नुश्शीर्षमुदयोऽथ द्वितीयभम् ।
धनं कुटुम्बं वागक्षि मुखं भुक्तिरथ त्रिभम् ॥ ७६ ॥

दुश्चिक्यं सहजः कर्णो गलो योधश्च विक्रमः ।
चतुर्थं च सुखं बन्धुः पातालं जलमालयम्(यः) ॥ ७७ ॥

हृदयं हिवुकं माता वाहनं चाथ पञ्चमम् ।
बुद्धिः कुक्षि(क्षिः) सुतो मन्त्री षष्ठं तु व्यसनं रिपुः ॥ ७८ ॥

क्षतं रोगः कटीवि( टिर्वि )ग्रश्चौ(श्चो)रोऽथ(थो) सप्तमं मदः ।
मदनो महिला भर्ता जामित्रं बस्तिरस्त्रकम्(स्तभं) ॥ ७९ ॥

याम्यं निधनमायुश्च छिद्रं रन्ध्रं हि गुह्यकम् ।
मृत्युर्हनुर्लयपदं चाष्टमं कथ्यते बुधैः ॥ ८० ॥

गुरु(रुं)र्ध(ध)र्मं तपो भाग्यं मङ्गलं नवमं विदुः ।
आज्ञा मानं नभो मध्यं मेषूरणं पिता गृहम् ॥ ८१ ॥

प्रवासमास्पदं कीर्तिर्दशमं च विदुर्बुधाः ।
भवं चागममायं च प्राप्तिर्लाभमुपान्त्यभम् ॥ ८२ ॥

एकादशमथो रिप्फं यूधं(युद्धं) चान्त्यं व्ययं तथा ।
चरणं द्वादशं चैव लग्नादीनां विचिन्तयेत्
अन्यानि नामधेयानि प्रयोगाल्लौकिकात्पुनः ॥ ८३ ॥

**इति श्रीदैवज्ञाभरणे लग्नविवेचनं नाम तृतीयः प्रकाशः ॥**
**आदितः श्लोकसंख्या १३५**

---

श्रीः

# अथ चतुर्थः प्रकाशः

॥ प्रसूतिविवेचनम् ॥

अथ प्रवक्ष्ये च गुरूपदेशतः
प्रसूतिकालस्य च निर्णयं परम् ।
यज्ज्ञात(न)मात्रेण च याति प्रत्ययं
ह्यरिष्टवासप्रमुखादिकं फलम् ॥ १ ॥

**मूर्धादिप्रसवज्ञानम्**

शीर्षोदये विलग्ने मूर्धा(ध्ना) प्रसवोऽन्यथोदये चरणौ( णैः ) ।
उभयोदये च हस्तौ(स्तैः) शुभदृष्टे शोभनोऽन्यथा कष्टम्(ष्टः) ॥ २ ॥

**ऊर्ध्वमुखादिप्रसवज्ञानम्**

शीर्षोदये चा(चो)र्ध्वमुखप्रसूतिः
पृष्ठोदयेऽधोमुखतो भवेत्सः(त्सा) ।
पार्श्वोदये पार्श्वगतात्तदाऽस्यात्

**प्रकारान्तरेण पादप्रसवज्ञानम्**

पृष्ठोदयों(यां)ऽशेऽत्र च पादपूर्वा ॥ ३ ॥

तथैव पृष्ठोदयलग्नके च
मीनांशकेऽङ्घ्रिद्वयपूर्वसूतिः ।

**कष्टप्रसवः**

तत्कालचन्द्रे स्मरबन्धुसंस्थे
[1]क्रूरैर्जनन्या बहुदुःखमेवम् ॥ ४ ॥

---

१. क्रूरैर्युते दृष्टे वा इति शेषः । अत्र वराहमिहिरः “पापैश्चन्द्रात्स्मरसुखगतैः क्लेशमाहुर्जनन्याः” इति । तद्रीत्या “तत्कालचन्द्रात्स्मरबन्धुसंस्थैः” इति पाठः कल्पनीयः ।

लग्नाधिपेंऽश[क]पतौ लग्नस्थे ग्रहवक्रतो वापि ।
विपरीतगर्भमोक्षो वाच्यो गर्भस्य सङ्क्लेशः ॥ ५ ॥

### प्रकारान्तरेण ऊर्ध्वमुखादिप्रसवज्ञानम्

उत्तानस्य मृगारिमन्मथतुलाकन्याजकुम्भोदये
जन्माधोवदनस्य चापमृगगोकर्क्यालिलग्ने शिशोः ।
[१]…. …. …. …. …. ….
…. …. …. …. …. …. ॥ ६ ॥

### अथ यमलजननयोगाः

चतुष्पदगते भानौ [२]सौरिणा च समन्विते ।
द्वितनुस्थेऽपि यमलौ भवेतां कोशवेष्टितौ ॥ ७ ॥

लग्नेशे राहुसंयुक्ते मन्दभौमनिरीक्षिते ।
लग्नेशे मन्दशून्य(राशि)स्थे जातश्च यमलो भवेत् ॥ ८ ॥

द्वितीयाधिपदेहेशावेकस्थानस्थितौ यदि ।
राहुणापि च संदृष्टे(दृष्टौ) गर्भद्वित्वं(युग्मं) प्रसूयते ॥ ९ ॥

लग्ने राहुस्तदीशोऽपि कर्मस्थः पापसंयुतम्(तः) ।
चतुर्ग्रहे(हैः) स्वोच्चसंस्थे ग(स्थैर्ग)र्भद्वित्वं(युग्मं) प्रसूयते ॥ १० ॥

### कन्याषण्डयमलजननज्ञानम्

लग्ने बुधक्षेत्रगतेऽथ( तेंऽश )नाथे
लग्ने स्थिते सोमसुतेऽक्षिते च ।
जातस्तु सस्त्रीकनपुंसकः स्यात्
कन्यावियोगो पुरुषस्तु षण्ढः(डः) ॥ ११ ॥

### इति यमलजननयोगाः

---

१. अत्र ग्रन्थपातो दृश्यते । तद्भागो मया पूरितः " मीने पार्श्वमुखस्य जन्म कथयेत् पापैर्युते वीक्षिते मातुः क्लेशमुशन्ति मन्मथगतैर्भौमेक्षितैर्वा खलैः" इति ।

२. "शेषैर्वीर्यसमन्वितैः । द्वितनुस्थैश्च" इति वराहमिहिरः ।

अथ नालवेष्टितजननयोगाः

छाग(गे) सिंह(हे) वृषे लग्ने तत्स्थे मन्देऽथवा कुजे ।
राशी(श्यं)शसदृशे पा(गा)त्रे जायते नाडिवेष्टितः ॥ १२ ॥

लग्नेशभावे(गे) वहुपापदृष्टे
राहुध्वजाभ्यां सहितो(ते)ऽथ जातः ।
पापग्रहाणां विलग्नभे वा
जातो नरो नाडिविवेष्टिताङ्गः ॥ १३ ॥

क्रूरान्तरे लग्नगते च राहौ
लग्ने कुजे वासव(र)नाथदृष्टे ।
लग्ने शनौ भूमिसुतेन दृष्टे
जातो नरो नाडिविवेष्टिताङ्गः ॥ १४ ॥

लग्नेश्वरे लग्नगते तु लग्ने
भोगे(गी)न्द्रयुक्ते सति पादजातः ।
रन्ध्रेश्वरे राहुयुते विलग्ने
सदोरगैर्वेष्टितसंभवः स्यात् ॥ १५ ॥

इति नालवेष्टितजननयोगाः

प्रसवगृहभागवस्त्रपरिवारनारीणां ज्ञानम्

मेषे हरौ धनुषि मन्दिरपूर्वभागे
शुक्लाम्बरा युवतितां(पं)चजनस्य मध्ये ।
कन्ये(न्या)वृषे मकरगे गृहदक्षिणांशे
नारीचतुष्टययुता हरिदम्बरा च ॥ १६ ॥

पश्चिमे कुम्भयुग्मे तु तुलायां सप्तभिः सह ।
प्रसूता युवतीसार्धं(भिश्च) म्लानशुक्लाम्बरान्विता ॥ १७ ॥
उत्तरस्यां भवेत्सूतिर्मीनकर्कटवृश्चिके(कैः) ।
नारीषड्भिर्युता सा च म्लानवस्त्रसमन्विता ॥ १८ ॥

---

१. स्थिताविति शेषः ।

### प्रसवे शिरोदिग्ज्ञानम्

मेषे चापमृगेन्द्रयोः किल गृहं(हे) प्राचीशिरो(रा) जायते
कन्यागोमकरेषु दक्षिणशिरो(रा) जातो भवेन्निश्चितम् ।
मीने वृश्चिककीटयो(कर्किणो)र्यदि तदा कौबेरदिग्भागतः
कुम्भाक्षो(म्भर्क्षे) धटयुग्मयोर्यदि तदा पश्चाच्छिरो(रा) जायते ॥ १९॥

## "अथ प्रसूतिस्थलज्ञानम्"

### भूमध्ये प्रसवज्ञानम्

कर्कटवृश्चिकलग्ने ख(श)निसंयुक्ते तथे(ऽवटेऽ)न्दुसंदृष्टे ।
[1]चरभवनादिगते परस्परं विषयान्तरे प्रसूतिः स्यात् ॥ २० ॥

जलचरलग्नगते बुधरविचन्द्रैः प्रदृश्यते(द्रैर्दृष्टे शनौ) क्रमशः ।
क्रीडास्थानं सुरगृहं मूषिक(हमूषर)भूमिं वदेत्प्रसवे ॥ २१ ॥

नृराशिसंस्थोदयगं शनैश्चरं
पश्येद्रविर्भूपतिमन्दिरे भवेत् ।
प्रसूतिरुचो(रुचो)पगतः स(स्व)राशिगो
देवालयेऽन्येक्षि(न्यर्क्ष)गतश्च गोकुले ॥ २२ ॥

कुजः श्मशाने गुरुरग्निमन्दिरे
सुधांशुशुक्रौ च सुरस्य(म्य)सद्मनि ।
शिल्पालये सौम्यनिरीक्षिते च
तदा बलाधिक्यवशाद्ग्र(गृ)हांशयोः ॥ २३ ॥

### जलसमीपे प्रसवज्ञानम्

मीने मृगे कर्किणि लग्नगे वा
तस्माच्छशाकर्म(शांकेर्थ)चतुष्टये वा ।

---

१. अत्र वराहमिहिरः "राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे । स्वर्क्षांशगते स्वमंदिरे बलयोगात्फलमंशकर्क्षयोः" इति ।

भवेद्यदा पूर्व(र्ण)तनुस्तदा वा
वाच्यः(च्या) प्रसूतिर्जलसन्निकर्षे ॥ २४ ॥

**पितृमातृगृहप्रसवज्ञानम्**

बलाधिकेऽर्के दिवसे प्रसूतिः
पितुर्गृहे मातृगृहे च शुक्रे ।

**पितृव्यमातुलगृहप्रसवज्ञानम्**

निशीनसूनौ शशिनीति तद्वत्
पितृव्यमातृव्यगृहे क्रमेण ॥ २५ ॥

**दार्वादिनिर्मितनीचगृहप्रसवयोगः**

नीचस्थितैः सौम्यखगैर्गृहेषु
नीचेषु दार्वादिविनिर्मितेषु ।

**आकाशमध्यप्रसवयोगः**

प्रसूयते[1] तैर्गगने स्थितस्य

**वृक्षलतामध्यप्रसवयोगः**

तथा विधौ वृक्षलतासु जन्म ॥ २६ ॥

**जलमध्ये प्रसवज्ञानम्**

सृष्टि(जल)स्थिते शीतकरे बलिष्ठे
बुधे(म्बुगे) विलग्ने सुखगे च(गैश्च) सौम्ये(म्यैः) ।

**पोतमध्ये प्रसवज्ञानम्**

बलान्विते वास्तु(स्त)गते शशाङ्के
प्रसूयते पोतगतोऽम्बुलग्ने ॥ २७ ॥

**पुनरपि जलमध्ये प्रसवज्ञानम्**

मृगापरार्धे झषकर्क(र्कि)कुम्भ( कौर्पि )
लग्नं च तत्रैव गृहे शशाङ्कः ।

---

१. स्वोच्चस्थितैस्तैर्गगने स्थितस्य इति पाठः साधुः ।

वीर्यान्वितः पूर्णतनुः प्रपश्यन्
करोति सूतिं सलिले तदानीम् ॥ २८ ॥

[1]लग्नेशमेषूरणसंस्थितो वा
स्थलांशगस्तत्परितो जलं स्यात् ।

कारागृहे प्रसवयोगः

[2]रिप्पस्थमन्दः शुभखेटयुक्तो
गुम्फे प्रसूतिः सितलग्नयोगे ॥ २९ ॥

प्रसवगृहदिग्ज्ञानम्

भचक्रे [यो] बलीय(यां)स्तु तद्द(द्दि)शं प्र( सू )तिमन्द्र(न्दि)रम् ।
तुलाजकर्किकुम्भालिलग्ने प्राक्पश्चिमे गतम्(वि) ॥ ३० ॥
[3]उदीच्यार्धमुहूर्ते स्यान्मुहूर्ते वास्तुदक्षिणे ।

द्वयादिभूमिकप्रसवगृहज्ञानम्

गुरुरुच्चगतो द्वित्रिचतुर्भूमिज्ञ(क)मन्दिरम्
त्रिशालं चापम(गोऽ)न्यस्मिन्द्विमुहूर्ता त्रि(मूर्तौ स्याद्द्वि)शालकम् ॥ ३१ ॥

प्रसवगृहस्य जीर्णत्वादिकम्

चित्रं नवं भृगुसुते च हृतौ (दृढं) गुरौ च
दग्धं कुजे दिनकरे [4]परिजीर्णकाष्ठम् ।
चन्द्रे वनं च बहुशिल्पिकृतं बुधे च
[5]जीर्णं भवेद्गृहमिहोष्णकरात्मजेन ॥ ३२ ॥

---

१. विलग्नमेषूरणवन्धुगो वा जलांशगस्तत्परितो जलं स्यात् इति पाठः साधुः ।

२. अत्र "उदयोडुपयोर्व्ययस्थिते गुप्त्यां पापनिरीक्षिते यमे" इति वराहमिहिरः । एतच्छ्लोकसाम्यं प्रकृते श्लोके वर्तते इति भाति । अतोऽयं श्लोकः "रिःफस्थ-मन्देऽशुभखेटदृष्टे गुप्त्यां प्रसूतिर्विधुलग्नयोर्वा" इति पठनीय इति भाति ।

३. अत्र "उदीचीस्थं द्विमूर्तौ स्यात्सिंहैणौ वास्तुदक्षिणे" इति पाठः साधुः ।

४. अत्र "परिपूर्णकाष्ठम्" इति सारावळी ।

५. अत्र "जीर्णं संस्कृतमर्कजे" इति वराहमिहिरः ।

### प्रसवगृहद्वारज्ञानम्

केन्द्रे स्थितस्य बलिनो दीर्घ(दिशि) द्वारं गृहस्य च ।
लग्नेशस्य द्वादशांशान्मु(मु)ख्यं(ख्याः) केन्द्रेषु ये ग्रहाः ॥ ३३ ॥
गृहः(ह)प्रागादिदिक्षु स्याद्वौ द्वौ रि(दि)शि द्विमूर्तयः ।
कोणेष्वन्तरसंस्था ये वह्निकाष्ठादिषु क्रमात् ॥ ३४ ॥

### प्रसवमञ्चशिरोदिग्ज्ञानम्

तत्काल(ल)ग्नदिक्छ(कु्च)कदिशि शय्याशिरो भवेत् ।
बलहीने तु लग्नेशे तदंशगृहदिक्छिरः ॥ ३५ ॥

### प्रसवमञ्चलक्षणम्

शय्यायां वास्तुवद्राशीन् लग्नादीन्विन्यसेत्क्रमात् ।
कोणस्थराशयः पापा(दा) वक्रांशा द्वितनुस्थलम् ॥ ३६ ॥
दृढशैथिल्यता ज्ञेया स्थानानां च शुभाशुभैः ।
राशयो बलिनश्चैव(वं) अन्यथा तु नवांशकैः ॥ ३७ ॥

### प्रसवगृहे दीपलक्षणम्

शशिभुक्तिमिते स्नेहो राशो(शौ) वर्ती च लग्नभाक् ।
अर्ध(र्क)भाग्दीपसंस्थानं वेदेच्च द्विग्रहेऽपि च ॥ ३८ ॥

### दीपवर्तिज्ञानम्

यैलग्नाद्गुदितं वर्ती दग्धा तु तावती दीपम् ।

### दीपतैलज्ञानम्

पूर्णे पूर्णं शशिनि क्षीणे क्षीणस्तु तैलस्य ॥ ३९ ॥

---

१. वदेच्चरगृहादिवत् इति पाठः साधुः ।

२. अत्र "यावल्लग्नादुदितं वर्तिर्दग्धा तु तावती भवति ।
दीपः पूर्णे पूर्णः शशिनि क्षीणे क्षयस्तु तैलस्य ।" इति सारावली ।

### दीपसंख्याज्ञानम्

बलवति सूर्ये दृष्टे बहून्प्रदीपान्वदेत् (कुपुत्रेण) ।

### तृणकृतदीपज्ञानम्

तैत्रैवान्यैर्व्यपगतवीर्ये सूतौ ज्ञातस्तृणैर्भवति ॥ ४० ॥

### दीपवर्तिवर्णज्ञानम्

लग्नस्य यत्र(श्च) वर्णा(र्णो ) निर्दिष्टा(ष्ट)स्तेन वर्तिरादेश्या:(श्या) ।
द्रेक्काणनवमांशस्य वर्णनिवर्तिका प्रसवे ॥ ४१ ॥

### दीपनिक्षेपस्थलनिर्देशः

ग्र(गृ)हस्य द्वादशांशेषु प्रागाद्या: क्रियपूर्विका: ।
यत्र श्रेणि(स्थाने)स्थितो भानुस्तत्र दीपं विनिर्दिशेत् ॥ ४२ ॥

॥ इति श्रीदैवज्ञाभरणे प्रसूतिविवेचनं नाम चतुर्थः प्रकाशः ॥

॥ आदितः श्लोकसंख्या १७७ ॥

---

१. अत्र "अन्यैरपि गतवीर्यैः सूतौ ज्योतिस्तृणैर्भवति" इति सारावळी ।

२. "द्रेक्काणनवांशकयोर्वर्णयुता वर्तिका प्रसवे" इति पाठः साधुः ।

॥ श्रीः ॥

# ॥ अथ पञ्चमः प्रकाशः ॥

## ॥ नक्षत्रगण्डविवेचनम् ॥

### गण्डविचारस्यावश्यकता

जातमात्रेण बालस्य चादौ गण्डं विचारयेत् ।
पित्रादिकानां गण्डं च खेटरिष्टं ततः परम् ॥ १ ॥

बालस्य जातमात्रेण गण्डं तिथ्यादिकं चरेत् ।
खेटदि(रि)ष्टं ततः पश्चात्पितृमातृ त(तुर्मातुस्त)तः परम् ॥ २ ॥

## ॥ अथ तिथिगण्डाः ॥

### तिथिगण्डघटिकाः

पूर्ण(र्णा)नन्दाक्ष(ख्य)योस्तिथ्योः सन्धिर्नाडि(डी)चतुष्टयम् ।
उद्वाहजन्मयात्रासु गण्डान्तं निधनप्रदम् ॥ ३ ॥

अमाप्रतिपदोर्मध्यं पञ्चमीषष्ठिमध्यमम् ।
दशम्येकादशीमध्यं तिथिगण्डाः प्रकीर्तिताः ॥ ४ ॥

### कृष्णचतुर्दश्यां षड्भागजननफलम्

कृष्णपक्षे [1]चतुर्दश्योर्गण्डांशे प्रथमे शुभम् ।
द्वितीये पितरं हन्ति तृतीये मातरं तथा ॥ ५ ॥

चतुर्थे मातुलं हन्ति पञ्चमे [2]भ्रातृनाशनम् ।
आत्मानं चैव गण्डांशे जातपुत्रं न संशयः — ॥ ६ ॥

---

१. चतुर्दश्याः षड्भागे इति पाठः साधुः

२. वंशनाशनं इति पाठांतरं

३. षष्ठे तु सर्वनाशः स्याच्चतुर्दश्याः फलं क्रमात् इति पाठांतरं ।

### अमायां षड्भागजननफलम्

अमायां षट्सु भागेषु क्रमशः फलमुच्यते ।
प्रथमे वित्तहन्ता स्यान्मातृहन्ता द्वितीयके ॥ ७ ॥
तृतीये पितृहन्ता च मातुलघ्नश्चतुर्थके ।
आत्महा पञ्चमे षष्ठे जातपुत्रो हि दोषभाक् ॥ ८ ॥

### सिनीवालीप्रसवफलम्

सिनीवालीप्रसूतायां पत्युः शान्तिं समाचरेत् ।
गजाश्वमहिषादीनां परित्यागो विधीयते ॥ ९ ॥

### तिथिगण्डसन्धिविषये मतभेदः

विश्वामित्रादयश्चाथ वदन्ति विदितागमाः ।
नाड्यर्धभोगं सर्वेषां गण्डसन्धि(धिं) मं(म)नीषिणः ॥ १० ॥
यामं यवनाधिपतिस्तदर्धभागं भृगुरित्या(रथा)ह ।
गण्डशिरोऽस्त(न्त)गण्डं तदर्धं तु गिरामीशः ॥ ११ ॥

इति तिथिगण्डाः

## ॥ अथ नक्षत्रगण्डम् ॥

### नक्षत्रगण्डघटिकाः

अन्त्य(न्त्ये) पौष्णोरगे(गै)न्द्राणां गण्डाख्याः पञ्चनाडिकाः ।
आद्ये मघाश्विमूलानामरिष्टं नाडिकात्रयम् ॥ १२ ॥

### नक्षत्रादिगण्डविषये मतभेदः

ऋक्षमध्ये चतुर्नाड्यो दिनमध्ये तथैव च ।
एवं(क)नाडी राशिमध्ये गण्डान्तं स्याद्यथाक्रमम् ॥ १३ ॥

### अभुक्तनक्षत्रघट्यः

भौजङ्गपौरन्दरपौष्णभानां
तदग्रजा(भा)नां च यदन्तरालम् ।

अभुक्तसंज्ञं प्रहरप्रमाणं
त्यजेत्सुतं तत्रभवं(वां) सुतज्ञः(तां च) ॥ १४ ॥

### अभुक्तमूले मतान्तरद्वयम्

मूलादौ घटिकायुग्मं ज्येष्ठान्ते घटिकाद्वयम् ।
अभुक्तसंज्ञं विज्ञेयं तत्र जातं शिशुं त्यजेत् ॥ १५ ॥

ज्येष्ठान्ते पादघटिका मूलादौ पादनाडिका ।
तयोर्मध्येऽर्धघटिका त्वन्तरालं जगुर्बुधाः ॥ १६ ॥

### अभुक्तमूलजननफलम्

अभुक्तमूलजातस्य दर्शनं वर्जयेत्पिता ।
यदि पश्यति संमोहान्म्रियते वत्सरार्धतः ॥ १७ ॥

### अभुक्ताश्लेषादिजननफलम्

स(सा)र्पपित्रु(पैत्र)भयोर्मध्ये त्वन्तरालं जगुर्बुधाः ।
अभुक्तं ना(चा)स्ति तत्रैव दोषो नास्त्यवलोकने ॥ १८ ॥

### गण्डजातानां दर्शनदोषापवादः

गण्डप्रसूतपुरुषं शुभमाहुरन्येशं? नृणमकम् ।
अन्ये च होमपूर्वदाने तद्दशनं शुभम् ॥ १९ ॥

### अभुक्तज्येष्ठायां मूलादिपादत्रये च जननफलम्

घटिके च द्वितीये च ज्येष्ठान्त्यस्य च मूलके ।
पादत्रये जातनरो ज्येष्ठपु(पि)त्रादिनाशकृत् ॥ २० ॥

---

१. अत्र ग्रन्थपातो दृश्यते। तथापि
"गण्डान्तेषूद्भवो मर्त्यः पितृमातृकुलान्तकः ।
यदि जीवेत्स भूपालो गजवाजिसमन्वितः ॥"
इति श्लोकाभिप्रायस्तत्र भाति ।

२. घटिकाद्वितये चापि इति पाठान्तरम् ।

### वारगण्डः तत्फलं च

कुजता(वा)रयुते च(चै)न्द्रे यदि जातोऽनुजं हरेत् ।
मूलार्के पितरं हन्ति वारगण्डा न संशयः ॥ २१ ॥

### ज्येष्ठानक्षत्रजननफलम्

ज्येष्ठान्त्यपादजातस्तु पितरं हन्ति निश्चयम् ।
ज्येष्ठर्क्षे च यदा जातो हन्ति शीघ्रं तदग्रजम् ॥ २२ ॥

### ज्येष्ठानक्षत्रजकन्याफलम्

अन्यच्च—

ज्येष्ठजा ज्येष्ठजं हन्ति द्वितीयां(ये) चाथ सोदरम् ।
तृतीया(ये) पितरं हन्ति स्वयंजाता चतुर्थके ॥ २३ ॥

### ज्येष्ठानक्षत्रजातनरफलम्

ज्येष्ठं ज्येष्ठाद्वि(द्य)पादे तु द्वितीयेऽप्यग्रजं तथा ।
वित्तं हन्ति तृतीये तु चात्मानं हन्ति तुर्यके ॥ २४ ॥

### ज्येष्ठानक्षत्रजनने विशेषः

ज्येष्ठां ज्येष्ठाद्यपादोत्थं(त्थां) हन्ति जातो न बालकः ।
हन्ति ज्येष्ठाद्यपादोत्थं स्वज्येष्ठं चैव कन्यका ॥ २५ ॥

### ज्येष्ठान्त्यपादघटिकाफलम्

ज्येष्ठान्त्यपादघटिकावसु८वेदा४ग्नितः३क्रमात् ।
ज्येष्ठभ्रातरं पितरं स्वात्मानं हन्ति तत्रजः ॥ २६ ॥

### ज्येष्ठानक्षत्रदशगण्डफलम्

ज्येष्ठर्क्षे दशगण्डानां फलं वक्ष्ये यथाक्रमम् ।
ज्येष्ठादौ जननीमाता द्वितीये जननीपिता ॥ २७ ॥

---

१. प्रथमे पादे इति शेषः ।

तृतीये जननीभ्राता स्वयं माता चतुर्थके ।
स्वयं शिशुः पञ्चमे च षष्ठे गोत्रे विनिर्दिशेत् ॥ २८ ॥

सप्तमे चोभयकुलं ह्यष्टमे च विनाशनम् ।
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ॥ २९ ॥

## मूलानक्षत्रपञ्चदशगण्डफलम्

गतेष्व(तैष्य)घटिका मूला(ल)धिष्ण(ष्ण्य)स्य तिथिभाजिता(ताः) ।
क्रमादब्दगण्डगण्डफलं पिताद्ये तत्र नश्यति ॥ ३० ॥

द्वितीये पितृभ्रातरं तृतीये भगिनीपतिम् !
पितामहं चतुर्थे तु मातरं पञ्चमे नशे(हरे)त् ॥ ३१ ॥

षष्ठे च मातृभगिनीं सप्तमे मातुलं तथा ।
पितृव्यपत्नीमष्टे च नवमे त्वखिलं तथा ॥ ३२ ॥

दशमे पशुसंहन्ता भृत्यं चैकादशे तथा ।
द्वादशे च स्वयं जातं ज्येष्ठज(जं)स्य(च) त्रयोदशे ॥ ३३ ॥

चतुर्दशे तद्भगिनीं चान्ते मातामहीं तथा ।

## मूलानक्षत्रपादचतुष्टयजननफलम्

मूलाद्यपादे पितरं द्वितीये च जनन्यकाम् ॥ ३४ ॥

धनक्षयं तृ(यस्तृ)तीये च चतुर्थके(र्थस्तु) शुभावहा(हः)

## आश्लेषानक्षत्रपादचतुष्टयजननफलम्

आश्लेषाद्ये न गण्डं स्याद्द्वितीये धनगण्डकम् ॥ ३५ ॥

---

१. गोत्रक्षयो भवेत् इति भारद्वाजः ।

२. ज्येष्ठसोदरम् इति भारद्वाजः । ज्येष्ठानक्षत्राद्यन्तप्रमाणं दशधा विभज्य प्रथमादिभागेषूत्पन्नस्य फलमत्राभिधीयते । एवं मूलानक्षत्राद्यन्तप्रमाणं पञ्चदशदा विभज्य फलमग्रे कथ्यते ।

३. क्रमाद्गण्डा गण्डफलं इति पाठः साधुः ।

४. पत्नीं पितृव्यस्य गजे इति पाठान्तरम् ।

५. हन्ति मातरम् इति पाठः साधुः ।

तृतीये मातृगण्डं च पितृगण्डं चतुर्थके ।

### आश्लेषानक्षत्रद्वादशगण्डफलम्

सर्पाद्ये जन्मपादेन दीर्घायुर्बहुपुत्रवान् ॥ ३६ ॥
द्वितीये संपदश्चैव तृतीये च दरिद्रकः ।
चतुर्थे ह्यर्थनाशं च(श्च) पञ्चमे मरणं भवेत् ॥ ३७ ॥
षष्ठे च मातुलं हन्ति कामे मात्रनुजामपि ।
अष्टमे श्वश्रूमरणं नवमे भगिनीं तथा ॥ ३८ ॥
ज्येष्ठभ्रातॄंश्च दशमे मातृगण्डं च रुद्रके ।
द्वादशे पितृगण्डं स्यादिति गण्डो विधीयते ॥ ३९ ॥

### इतरर्क्षगण्डः

### पूर्वाषाढापुष्यजननफलम्

पूर्वाषाढे च(ढासु) पुष्ये च भ्रातरं मातुलं सुतम् ।
मातरं च शिशुं ह(शुर्ह)न्यात्प्रथमाद्यंशकक्रमात् ॥ ४० ॥
पूर्वाषाढे धनुर्लग्ने जातः पितृविनाशकृत् ।
पुष्ये कर्कटके लग्ने मातुर्मरणमादिशेत् ॥ ४१ ॥

### उत्तरादिषु पादभेदेन जननफलम्

उत्तराफाल्गुनीधिष्ण्ये प्रथमे पादके तथा ।
जीवधिष्ण्यस्य मध्यस्थः(स्थ)पादयोस्तूभयोर्यदि ॥ ४२ ॥
पादे तृतीये चित्रायां मखाद्ये यमभस्य च ।
तृतीयेंऽशे च हस्तस्य चतुर्थांशेऽन्त्यभस्य च ॥ ४३ ॥
जातस्तु पितरं हन्ति जाता चेन्मातरं तथा ।

### मतान्तरेण पुष्यपादचतुष्टयजननफलम्

पुष्याद्यंशे(शेषु) क्रमाज्जतः पितृमात्रात्ममातुलान् ॥

### नक्षत्रगण्डजातस्य पुंस्त्रीलग्नवशात् फलम्

हन्ति प्राक्पुंस्त्रीलग्ने तु जनकं जननीं क्रमात् ॥ ४४ ॥

इति नक्षत्रगण्डम्

---

१. आद्ये सर्पद्वादशांशे इति पाठः साधुः ।

## ॥ अथ कालगण्डः ॥

दिवा जातस्तु पितरं रात्रौ चेन्मातरं तथा ।
आत्मानं सन्ध्ययोर्हन्ति नास्ति गण्डो विपर्ययः(ये) ॥ ४५ ॥
[१]ऋक्षस्यान्ते भवेद्रात्री रात्रौ वापि दिनं भवेत्
सन्ध्यासु ऋक्षसन्धौ वा तदेतद्गण्डलक्षणम् ॥ ४६ ॥

इति कालगण्डः

## ॥ अथ अब्दगण्डमासगण्डौ ॥

### अब्दगण्डः

अश्विन्यां षोडशाब्दे तु(ब्दास्तु) मखाद्ये(यां) चाष्टवत्सरम्(राः) ।
मूले चाब्दचतुष्के(ष्कं) च ज्येष्ठे युग्मं तथैव च ॥ ४७ ॥
अब्दद्वयं चैव शुक्रे (सार्पे) रेवत्यामब्दमेव च ।

### मासगण्डः

द्वौ मासं चो(साद्यु)त्तरे दोषं पुष्ये चैव त्रिमासकम् ॥ ॥ ४८ ॥
नैवमे मासि पितरं पूर्वाषाढोद्भवः पुमान् ।
चित्रानक्षत्रजः षष्ठे नवमे सप्त(हस्त)धिष्ण्यजः ॥ ४९ ॥
मूलाजश्चाष्टमे मासि ज्येष्ठाजातस्तु पञ्चमे ।
अहृक्षजस्तृतीयेऽब्दे चतुर्थे यमधिष्ण्यजः ॥
अभुक्तमूलजः पुत्रः पितरं हन्ति तत्क्षणात् ॥ ५० ॥

इति अब्दगण्डमासगण्डौ

## राशिगण्डः

कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः ।
गण्डान्तमन्तरालं स्याद्घटिकार्धं मृतिप्रदम् ॥ ५१ ॥

---

१. अत्र "ऋक्षस्यान्तो भवेद्रात्रिमध्ये वापि दिनार्धके" इति पाठः साधुरिति भाति ।

२. पूर्वाषाढाष्टमे मासि इति वसिष्ठमतम् ।

### योगगण्डाः

व्यतीपातेऽङ्गहीनः स्यात्परिघे मृत्युमादिशेत् ।
वैधृतौ पितृमृत्युः स्याद्विष्कम्भे चार्थहानिकृत् ॥
शूले तु शूलरोगः स्याद्गण्डे गण्डमवाप्नुयात् ॥ ५२ ॥

## ॥ अथ गण्डशान्तिः ॥

### गण्डशान्तिकरमभिषेचनम्

कुङ्कुमं चन्दनं कुष्ठं गोरोचनमथापि वा ।
घृतैरेवान्वितं कृत्वा चतुर्भिः कलशैर्बुधः ॥ ५३ ॥

सहस्राक्षेण मन्त्रेण बालकं स्नापयेत्ततः ।
पितृयुक्तं दिवा जातं मातृयुक्तं तु रात्रिजम् ॥ ५४ ॥

स्नापयेन्मातृपितृभ्यां सन्ध्ययोरुभयोरपि ।

### गण्डशान्तिकरं कांस्यपात्रदानम्

कांस्यपात्रं घृतैः पूर्णं दद्याद्गण्डोपशान्तये ॥ ५५ ॥

कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्बुधः ।
अष्टभिर्वा चतुर्भिर्वा द्वाभ्यां वा शोभनं शुभम् ॥ ५६ ॥

तन्मध्ये स्थापयेच्छङ्खं नवनीतप्रपूरितम् ।
राजतं चन्द्रमभ्यर्च्य श(श्वे)तपुष्पसहस्रकैः ॥ ५७ ॥

दैवज्ञः सोपवासश्च शुक्लाम्बरधरः शुचिः ।
सोमोऽहमिति संचिन्त्य कुर्यात्पूजां समन्ततः ॥ ५८ ॥

जपेत्सहस्रकं मन्त्रं श्रद्धयापि समन्वितः ।
दद्याद्वै दक्षिणामिष्टां गण्डदोषोपशान्तये ॥ ५९ ॥

## गण्डदोषहराण्यन्यानि दानानि पूजाश्च

[१] …………द्रव्याणि ताम्रपात्रं तिलान्वितम् ।
गण्डदोषोपशान्त्यर्थं यजुर्वेदविदः शुचीन् ॥ ६० ॥

दद्याद्धेनुं हिरण्यं च ग्रहांश्चापि प्रपूजयेत् ।
मूलाहिगण्डजं(जः) प्राणी जीवितो वा मृतोऽपि वा ॥ ६१ ॥

यथा हि सन्दष्टजनो विशेषैः
मन्त्रौषधैः स्वास्थ्यमुपैति भूयः ।
तथैव गण्डोरगदष्टजन्तुः
तदुक्तशान्तैः(न्त्या) सुचिरं स जीवेत् ॥ ६२ ॥

॥ इति श्रीदैवज्ञाभरणे नक्षत्रगण्डविवेचनं नाम पञ्चमः प्रकाशः समाप्तः ॥

आदितः श्लोकसंख्या २३९

---

१, अत्र ग्रन्थपातो दृश्यते । तत्र द्रव्याणि गण्डभोक्तानि इति पाठ; कल्पनीय इति भाति।

॥ श्रीः ॥

## ॥ अथ षष्ठः प्रकाशः ॥

## ॥ अथ रिष्टविवेचनम् ॥

### ॥ अथ सूर्यरिष्टम् ॥

**सद्योमरणयोगाः**

पापास्त्रिकोणकेन्द्रे सौम्याः षष्ठाष्टमव्ययगताश्च ।
सूर्योदये प्रसूतः सद्यः प्राणांस्त्यजति जन्तुः ॥ १ ॥

गगनस्थो दिवसकरः पापैः सर्वैर्निरीक्षितः सद्यः ।
मारयति सौम्य(भौम)भवने शनिभे च [न] संशयो भवति ॥ ॥ २ ॥

शशि(नि)कुजभवननिवासो भानुर्यदि भवति दशमस्थः ।
पापैर्दिवससंबन्धो दिवसचतुष्के ध्रुवं मरणम् ॥ ३ ॥

**इति सूर्यरिष्टम्**

### ॥ अथ सूर्यरिष्टभङ्गः ॥

यदा भानुर्भवेत्सिंहे मेषे वा मित्रवीक्षितः ।
यदा षष्ठाष्टका(ला)भस्थः तदा रिष्टं न जायते ॥ ४ ॥

तत्रैव शुभसन्दृष्टे शुभयुक्ते शुभं भवेत् ।
रिष्टभङ्गं च जायेत दीर्घमायुर्भवेच्छिशोः ॥ ५ ॥

**इति सूर्यरिष्टभङ्गः**

### ॥ अथ चन्द्ररिष्टम् ॥

**सद्योमरणयोगाः**

षष्ठा(ष्ठेऽ)ष्टमे च चन्द्रः सद्यो मरणाय पापसन्दृष्टः ।
अष्टाभिः शुभदृष्टौ(ष्टो) मिश्रैर्वर्षै(र्दृष्ट)स्तदर्धेन ॥ ६ ॥

---

१. पापैर्वीक्षितदृष्टो इति पाठः साधुः ।

क्षीणे शशिनि विलग्ने पापैः केन्द्रे(षु) मृत्युसंस्थैर्वा ।
भवति विपत्तिरवश्यं यवनाधिपतेर्मतं चैतत् ॥ ७ ॥

पापावुदयास्तगतौ [1]क्रूरेण युतः शशी ।
दृष्टश्च शुभेन(भैर्न) यदा मृत्युस्तु भवेदचिरायुः(त्) ॥ ८ ॥

क्षीणे हिमगौ व्ययगे पापैरुदयाष्टमगैः ।
केन्द्रेषु शुभो(ऽपि) न चेत्क्षिप्रं निधनं प्रवदेत् ॥ ९ ॥

सुतमदननवान्त्यलग्नरन्ध्रे-
ष्वशुभयुतो मरणाय शीतरश्मिः ।
भृगुसुतशशिपुत्रदेवपूज्यै-
र्यदि बलिभिर्न युतोऽवलोकितो वा ॥ १० ॥

दू(द्यू)नचतुरस्रसंस्थे पापद्वयमध्यगे शशिनि जातः ।
विलयं प्रयाति नित्यं देवैरपि रक्षितो बालः ॥ ११ ॥

[2]कैन्र्यजगोभ्योऽन्यगृहे क्रूरशेन्दुः
पापेऽक्षितो मृत्युकरो विलग्ने ।

वत्सरमरणयोगाः

सौरारयुक्तो धनपुत्रगश्चेत्
चन्द्रस्तदा हन्त्यमिते[3] च वर्षे ॥ १२ ॥

सप्तवर्षान्तमरणयोगः

पापैर्लग्नसमेतैः पापगृहस्थे स्मरेऽथवा चन्द्रे ।
सप्तभिरब्दैर्जातं नाशयति [4]गुरुं न गुरुणा दृष्टे ॥ १३ ॥

---

१. "क्रूरेण युतश्च शशी" इति वराहमिहिरः ।

२. गोकर्क्यजेभ्यो, इति पाठः साधुः ।

३. अत्र हन्त्यलिगोऽष्टवर्षे इति पाठेन भाव्यमिति भाति ।

४. सुतं न गुरुदृष्टे इति पाठः साधुः ।

### वर्षत्रयान्तर्मरणयोगः

लग्नाधिपति(ते)श्चन्द्रो मरणपदस्थः कष्टतां यातः ।
क्रूरैः सकलैर्दृष्टः शुभैर्विषै(क्षीणो वर्षै)स्त्रिभिस्तु मारयति ॥ १४ ॥

### मेषादिगतभागवशान्मरणाब्दज्ञानम्

नागट८गो९सिद्धि२४जाती२४पु५-
क्ष्मा१ब्धि४प्र(न्य)श्वि२३धृति१८र्नखाः २० ।
क्ष्माश्वि२१दिक्१० चेत्यजाद्यंशे
तत्तुल्याब्दे विधो(धौ)र्व्य(न्य)सुः ॥ १५ ॥

### पुनरपि सद्योमरणयोगाः

क्षीणं यदा शशाङ्कं पश्या(श्ये)द्राहुः समागमं(तं) क्रूरैः ।
मारयति तदा दिवसैर्निर्व्याजं कतिपयैरेव ॥ १६ ॥

धीधर्मलग्नेषु(ग्नास्त)मृतिव्ययेषु
पापान्वितः शीतरुचिः करोति ।
जातस्य मृत्युं यदि सौम्यजीव-
शुक्रेण(क्रैर्न) दृष्टः स्थिर(सह)संस्थितो वा ॥ १७ ॥

होरानिधनास्तगते पापेऽक्षिते व्ययस्थिते चन्द्रे
जातस्य भवति मरणं केन्द्रे न चेच्छुभैर्युते दृष्टे ॥ १८ ॥

लग्नाष्टमगते चन्द्रे क्रूरग्रहनिरीक्षिते ।

### दशमाब्दमरणयोगः

जातश्चेन्मृत्युमाप्नोति शुभदृष्टि(ष्टौ) दशाब्दके ॥ १९ ॥

इति चन्द्ररिष्टम्

## ॥ अथ चन्द्ररिष्टभङ्गः ॥

स्व(स्वो)चर्क्षे स्वगृहेऽथवा पितृगृहां(सखिगृहे) वर्गश्च(र्गे च) सौम्यस्य वा
संपूर्णः शुभवीक्षितः शशधरो वर्गे स्वकीयेऽथवा ।

शत्रूणामवलोकने न पतितः पापैरयुक्तेऽक्षितो
रिष्टं हन्ति सुदुस्तरं दिनमणिः प्रालेयराशिं यथा ॥ २० ॥

लग्नपतौ केन्द्रगते षष्ठाष्टमगोऽपि नैव हन्तीन्दुः ।
षष्ठाष्टमगः स्वोच्चे जीवबुधशुक्रसन्दृष्टः ॥ २१ ॥

चन्द्रः संपूर्णतनुः शुक्रेण च निरीक्षितः सुहृद्भागे ।
रिष्टहरणे श्रेष्ठो वातहरणे यथा मेघः ॥ २२ ॥

पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवा हिन(हनि) शुभाशुभदृष्टमूर्तिः ।
तं चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशुं न हन्ति ॥ २३ ॥

इति चन्द्ररिष्टभङ्गः

॥ अथ कुजरिष्टम् ॥

सद्योमरणयोगाः

भौमे(मो) विलग्ने शुभदैरदृष्टः
षष्ठा(ष्ठेऽ)ष्टमे चा(वा)र्कसुतेन युक्तः ।
सद्यः शिशुं हन्ति वदेन्मणिस्थः(स्थः)
स्मरे यमारौ न शुभेऽक्षितौ च ॥ २४ ॥

द्वादशाब्दमरणयोगः

भौमक्षेत्रे यदा जीवो जीवक्षेत्रे च भूमिजः ।
द्वादशाब्दे भवेन्मृत्युर्यदि रक्षति शङ्करः ॥ २५ ॥

पुनः सद्योमरणयोगाः

उदये भूमिपुत्रे च सप्तमे सहजे धने ।
सूर्यशौ(सौ)रियुते तत्र सद्यो मरणमादिशेत् ॥ २६ ॥

इति कुजरिष्टम्

## ॥ अथ कुजरिष्टभङ्गः ॥

[1] ....  ....  ....  ....  ....  ....

....  ....  ....  ....  ....  ....

इति कुजरिष्टभङ्गः

## ॥ अथ बुधरिष्टम् ॥

### चतुर्वर्षान्तर्मरणयोगाः

षष्ठा(ष्ठेऽ)ष्टमे स्वमूर्तौ च जन्मकाले यदा बुधः ।
चतुर्वर्गे(र्षे) भवेन्मृत्युरमृतैर्यदि सिञ्चति ॥ २७ ॥

कर्कठधाम्नि सौम्यः षष्ठाष्टमराशिगो विलग्नर्क्षात् ।
चन्द्रेण दृष्टमूर्तिर्वर्षचतुष्केण मारयति ॥ २८ ॥

### सद्योमरणयोगाः

षष्ठाष्टमगते चन्द्रे(न्द्र)युते वा क्रूरवीक्षिते ।
न शुभग्रहसंदृष्टे मासमेकं न जीवति ॥ २९ ॥

इति बुधरिष्टम्

## ॥ अथ गुरुरिष्टम् ॥

### वर्षत्रयान्तर्मरणयोगाः

बृहस्पतिर्भौमगृहा(हेऽ)ष्टमस्थः
सूर्येन्दुभौमार्कजदृष्टमूर्तिः ।
वर्षैस्त्रिभिर्भार्गवदृष्टिहीनो
लोकान्तरं प्रापयति प्रसूतम् ॥ ३० ॥

---

१. अत्र ग्रंथपातो दृश्यते। अतस्तत्स्थाने मदीयः श्लोकः पठनीयः । " छागे मृगे वृश्चिके वा लाभे विश्वंभरासुतः। तृतीये वा शुभैर्दृष्ट्युतो नान्यैर्न रिष्टकृत् " इति ।

षष्ठवर्षमरणयोगाः

भौमक्षेत्रे यदा जीवः षष्ठाष्टमद्वितीयगः[1] ।
षष्ठवर्षे भवेन्मृत्युर्यदि रक्षति शङ्करः ॥ ३१ ॥

इति गुरुरिष्टम्

## गुरुरिष्टभङ्गः

गुरुर्धनुषि मीने वा तथा कर्कटकेऽपि वा ।
भवेत्त्रिकोण(णे) केन्द्रे वा तदा रिष्टं न जायते ॥ ३२ ॥

## ॥ शुक्ररिष्टम् ॥

षष्ठवर्षमरणयोगाः

रविशशिभवने शुक्रो द्वादशरिपुरन्ध्रगोऽशुभैः[2] सर्वैः ।
दृष्टः करोति मरणं षड्भिर्वर्षैः किमिह चित्रम् ॥ ३३ ॥

## ॥ अथ शनिरिष्टम् ॥

मासांन्तर्मरणयोगः वत्सरान्तर्मरणयोगश्च

मारयति षोडशाहाच्छनैश्वरः पापवीक्षितो लग्ने ।
संयुक्तो मासेन वर्षाच्छुद्धस्तु मारयति ॥ ३४ ॥

वत्सरद्वयान्तर्मरणयोगाः

वक्री शनिर्भौमगृहोपपन्नः
[3]छिद्रेषु षष्ठे च चतुष्टये वा ।
कुजेन संप्राप्तबलेन दृष्टो
वर्षद्वयं जीवति तत्र जातः ॥ ॥ ३५ ॥

---

१. तृतीयगः इति यवनाभिमतः पाठः ।

२. रन्ध्रगैः इति सारावल्यभिमतः पाठः ।

३. अत्र चन्द्रेऽष्टषष्ठे इति सारावल्यभिमतः पाठः

विंशवर्षमरणयोगः

शनिक्षेत्रगते भानौ भानुक्षेत्रगते शनौ ।
विंश(शे) वर्षे भवेन्मृत्युरुत्पन्नो वा(न) मृतो यदि ॥ ३६ ॥

नवमवर्षमरणयोगः

भास्करो हिबुकसहितः शनैश्चरो मृत्युदायकः सूतौ ।
नवभिर्वर्षैर्जातो वदति ब्रह्मा च कौण्डाक्षः ॥ ३७ ॥

इति शनिरिष्टम्

॥ शनिरिष्टभङ्गः ॥

शनैश्चरस्तुलाकुंभे(भ)मकरेच(षु) यदा भवेत् ।
आद्य(ये) षष्ठे तृतीये च जातो(ते) रिष्टं न जायते ॥ ३८ ॥

॥ अथ राहुरिष्टम् ॥

पञ्चमवर्षमरणयोगः

राहुर्विलग्नयातो यमनिलयं नयति पञ्चभिर्वर्षैः ।

द्वितीयवर्षमरणयोगः

स एवाष्टमगतो मारयति नरं द्विवर्षेण ॥ ३९ ॥

दशमषोडशवर्षमरणयोगः

राहुश्चतुष्टयस्थो मरणाय निरीक्षितो भवति पापैः ।
वर्षैर्विदर्भ(र्वदन्ति) दशभिः षोडशभिः केचिदाचार्याः ॥ ४० ॥

दशदिनान्तर्मरणयोगाः

वामदक्षिणतो राहुश्चतुरश्रे स्थितो यदि ।
तथा रोगं नराः प्राहुर्दिनानि दश जीवति ॥ ४१ ॥

---

१. अत्र "भास्करहिमकरसहितः शनैश्चरो मृत्युदायकः सूतौ । वर्षैर्नवभिर्यातैरित्याह ब्रह्मशौण्डाख्यः" इति सारावल्यभिमतः पाठः ।

घटवृश्चिकसिंहेषु विलग्नस्थो विधुन्तुदः ।
पापैर्विलोकितो जातं हन्यात्सप्तमवासरे ॥ ॥ ४२ ॥

पापयुतक्षीणेन्दुः पश्यन् राहुं दिनैः शिशुं हन्ति ।

सप्तमवर्षमरणयोगाः

कुंभालिसिंहलग्ने सप्तभिर्वर्षैरभि(र्वर्षैः खलैः) दृष्टः ॥ ४३ ॥

पक्षान्तर्मरणयोगाः

चन्द्रसूर्यगृहे राशु(हु)श्चन्द्रसूर्ययुतो यदि ।
सौरिभौमेऽक्षिते लग्ने पक्षमेकं न जीवति ॥ ४४ ॥

जन्ममृत्युगतो राहुरष्टमे यदि चन्द्रमाः ।
तदा सद्यो ध्रुवं मृत्युर्जातकस्य न संशयः ॥ ४५ ॥

दशमविंशवर्षमरणयोगः

चतुर्थेऽपि यदा राहुः केन्द्रे भवति चन्द्रमाः ।
विंशवर्षे भवेन्मृत्युरमृतं यदि सिञ्चति ॥ ४६ ॥

षोडशाब्दमरणयोगः

दशमे च यदा राहुर्जन्मकाले यदा( भवेत्) शिशोः ।
षोडशाब्दे भवेन्मृत्युर्यदि शक्रोऽपि रक्षति ॥ ४७ ॥

इति राहुरिष्टम्

## ॥ अथ राहुरिष्टभङ्गः ॥

अजवृषकर्किणि(षु) लग्ने रक्षति राहुः समस्तरिष्टेभ्यः ।
पृथिवि(वी)पतौ प्रसन्ने कृतापराधं यथा पुरुषम् ॥ ४८ ॥

मेषे वृषे कुलीरे वा राहुर्लग्नसमाश्रितः ।
यदा सोमबुधैर्दृष्टो रिष्टभङ्गं तदा स्फुटम् ॥ ४९ ॥

---

१. दशमेब्दे इति यवनाभिमतः पाठः ।

## ॥ अथ केतुरिष्टम् ॥

### सद्योमरणयोगः

[1]केतोरुदयात्पूर्वं पश्चादुल्कागतेर्निधुते ।
रौद्रे सर्पमुहूर्ते प्राणैः सन्त्यज्यते जन्तुः ॥ ५० ॥

### मासद्वये वर्षद्वये वा मरणयोगः

केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन्प्रसूयते यस्तु ।
[2]वर्षद्वयेन मरणं विनिर्दिशेत्तत्र जातस्य ॥ ५१ ॥

इति केतुरिष्टम्

## ॥ अथ समुदायरिष्टम् ॥

बह्वायुषि स्थिते [3]देवी रिष्टाभिर्म्रियते नरः ।
तैलपूर्णः स्थितो दीपो वातैर्हन्यते यथा ॥ ५२ ॥

### सद्योमरणयोगः

लग्नमृत्युनवमव्ययस्थिताः
चन्द्रभानुकुजभानुसूनवः ।
कुर्वते मरणमाशु देहिनां
वीर्यवद्गुरुविलोकिते(ता) न चेत् ॥ ५३ ॥

होरागते सवितरि कण्टकस्थे न चेद्गुरौ ।
अष्टमे वा परे खेटाः सद्यो नाश(शा)य ते शिशुः(शोः) ॥ ५४ ॥

---

१. "केतोरुदयः पूर्वं पश्चादुल्कादिपवननिर्घाताः" इति सारावळी ।

२. मासद्वयेन इति सारावळी ।

३. दैवै रिष्टैः संम्रियते इति पाठः साधुः ।

लग्ने चे(च)न्द्रे व्यये भानौ नवमे वा शनैश्चरः(रे) ।
अष्टमे भूमिपुत्रे च सद्यो मरणमादिशेत् ॥ ५५ ॥

लग्ने भास्करपुत्रे च निधने हिममालिनि ।
तृतीयस्थे यदा जीवे स याति यममन्दिरम् ॥ ५६ ॥

उदये भूमिपुत्रे च सप्तमे सहजे धने ।
सूर्यसौरी यदा स्यातां सद्यो मरणमादिशेत् ॥ ५७ ॥

लग्नाष्टधर्मान्त्यगता वधाय[1]
चन्द्रारसौम्या गुरुणाऽप्रदृष्टाः ।
पापास्त्रिकोणाष्टमगाश्च सौम्याः
चन्द्रेण वा गीष्पतिना मृताय(न युक्ताः) ॥ ५८ ॥

दू(द्यू)नगतेऽर्के विलग्ने यम(मे) कुजे वा विपर्यये वापि ।
अन्यतरदृष्टे[2] चन्द्रे शुभैरदृष्टे शतायुर्मृत्युः ॥ ५९ ॥

लग्नान्त्यनवमनैधनसंस्थाश्चन्द्रसूर्यसौराराः ।
जातस्य मृत्युं(तिं) दद्युः परेण गुरुणा न चेद्दृष्टाः ॥ ६० ॥

लग्ने[3] चन्द्रार्कपापा बलिनः क्रमेण निधनेषु ।
सौम्यैरपि न दृष्टाः सद्यो मरणाय निर्दिष्टाः ॥ ६१ ॥

ग्रहणे परिवेषकाले जातः पापग्रहे विलग्नस्थे ।
लग्नेशे बलहीने जीवति पक्षत्रयं त्रिमासं वा ॥ ६२ ॥

चन्द्रे च जन्मलग्ने वा मन्दाररविवीक्षिते ।
यदि सौम्या न वीक्षन्ति(न्ते) सद्यो मरणमादिशेत् ॥ ६३ ॥

---

१. अयं सारावल्यभिमतो योगः । अयमेव योगः प्रकारान्तरेण वराहमिहिराभितः ।

२. अत्र—"लग्नाष्टधर्मान्त्ययुताः शशाङ्कभौमार्कमन्दा गुरुणा न दृष्टाः । इति यवनेश्वरः ।

३. "अन्यतरयुते वेन्दावशुभैर्दृष्टेऽचिरान्मृत्युः" इति सारावली ।

४. अत्र "लग्ने चन्द्रेऽर्के वा पापा बलिनस्त्रिकोणनिधनेषु । सौम्यैरदृष्टयुक्ताः सद्यो मरणाय कीर्तिता यवनैः" इति सारावली ।

लग्नस्थाने यदा सौरिः रिःफस्थाने च चन्द्रमाः ।
भौमस्तु सप्तमस्थाने म्रियते जातकः शिशुः ॥ ६४ ॥

चक्रपूर्वापरार्धे तु पापसौम्यग्रहा गताः ।
अलिकन्याद्वये जातः सद्यः प्राणं विमुञ्चति ॥ ६५ ॥

चैन्द्रपूर्वभागे वा पापास्सौम्यास्तथोत्तरे चैव ।
वृश्चिकलग्नेऽपि जातो गतायुपश्चक्रमुद्दिष्टम् ॥ ६६ ॥

नवमे पञ्चमे चन्द्रे चतुरश्रे स्थिते रवौ ।
एभिर्योगे भवेज्जातो त्रिरात्रं वापि(नाति)वर्तते ॥ ६७ ॥

यस्मिन्भानौ(नुः) स्थिते त(तस्त)स्माच्चन्द्रे जामित्रसंस्थिते ।
सप्ताहं जीवितं तत्र जातस्य मरणं ध्रुवम् ॥ ६८ ॥

चन्द्रो जामित्रसहितो युतोऽ(ता)ङ्गारकभास्करौ(रः) ।
राहोरु(हावु)दयगे जातो(ते) दशाहे मृत्युमादिशेत् ॥ ६९ ॥

सर्वे तु बलहीनाश्च चन्द्रे पापनिरीक्षिते ।
दशरात्रात्परं नास्ति सजीवं(जीवनं) च न संशयः ॥ ७० ॥

निशाकरस्त्रिकोणस्थस्तथा भवति भास्करः ।
तदा जातस्तु(स्य) भवति जीवितं तत्त्रिरात्रिकम् ॥ ७१ ॥

[२]भौमदिवाकरमन्दाश्छिद्रेण तु गृहे याताः ।
निधनं याति स नूनं मासमेकं न जीवति ॥ ७२ ॥

### मासद्वयान्तर्मरणयोगाः

अष्टमस्थे यदा चन्द्रे रविजे सप्तमे तथा ।
मासद्वयेन मरणं निर्दिशेज्जन्मिनां नृणाम् ॥ ७३ ॥

---

१. अत्र "चक्रस्य पूर्वभागे पापाः सौम्यास्तथेतरे चैव। वृश्चिकलग्ने जाता गतायुषो वज्रमुष्टियोगेऽस्मिन्" इति सारावली ।

२. "भौमदिवाकरमन्दास्छिद्रे जातस्य भौमगृहे। म्रियतेऽवश्यं स नरो यमकृतरक्षोपि मासेन" इति सारावली ।

मासद्वयेन मरणमुदये केतुसंस्थि(यु)ते ।
भौमार्किगेहगेऽर्के वा पापैर्दृष्टे विनाशकृत्　　॥ ७४ ॥

सार्धमासद्वयमरणयोगः

भौमचन्द्र(श्चन्द्रं) समाश्रित्य सप्तमस्थो भवेद्यदि ।
सप्त सप्तांश(प्तति)ऋक्षाणां(न्ते) जातस्य मरणं ध्रुवम्　　॥ ७५ ॥

पञ्चममासान्तर्मरणयोगः

लग्ने चार्कोऽष्टमे सौरिर्जायायां महि(भूमि)नन्दनः ।
न पश्येद्देवमन्त्री च पञ्चमासं न जीवति　　॥ ७६ ॥

षष्ठे अष्टमे वा मासे मरणयोगाः

अरिरन्ध्रगताः क्रूरा लग्नगा धनरिष्फगाः ।
मासे षष्ठा(ष्ठेऽ)ष्टमे वापि घ्नन्ति सोम्यैर्युता न चेत्　　॥ ७७ ॥

वर्षद्वये वर्षचतुष्टये वा मरणयोगः

[1]केन्द्रे रवौ क्षीणगते च चन्द्रे
　　क्षितिसुतमन्दविलोकिते च दैवात् ।
वर्षद्वयेन चन्द्रो मारयति
　　जातं यत्र नेक्षितो गुरुणा　　॥ ७८ ॥

द्वितीये चतुर्थे अष्टमे च वर्षे मरणयोगः

अ[ब्देऽ]ष्टक(के) केवलसौम्यदृष्टे
　　मिश्रेऽक्षिते वर्षचतुष्टयेन ।
चन्द्रे कुजर्क्षे शनिराहुदृष्टे
　　षडष्टकेन्द्रे मृतिकृद्द्विवर्षे　　॥ ७९ ॥

---

१. अत्र "केन्द्रे रविमुषिततनुः क्षितिसुतमन्दविलोकितोऽथ युतः । वर्षचतुष्के चन्द्रो मारयति किमत्र गणितेन" इति सारावली ।

### मासान्तर्मरणयोगः

होरायां नवमे सूर्यः सप्तमे च शरै(नै)श्चरः ।
एकादशे गुरौ शुक्रे मासमेकं न जीवति ॥ ८० ॥

### समातृशिशुमरणयोगः

कर्मस्थाने स्थितः सौरिः शत्रुस्थाने कलानिधिः ।
क्षितिजः सप्तमे चैव समाता म्रियते शिशुः ॥ ८१ ॥

### पक्षान्तर्मरणयोगः

चन्द्रसूर्यगृहे राहुचन्द्रसूर्ययुतो यदि ।
सौरिभौमेऽक्षितं लग्नं पक्षमेकं स जीवति ॥ ८२ ॥

### मासद्वयान्तर्मरणयोगः

शुभलग्ने यदा जातश्चाष्टमे च निशाकरः ।
शनैश्चरश्च बन्धुस्थो द्विमासे मृत्युमिच्छति ॥ ८३ ॥

### मृतगर्भप्रसवयोगः

निधने धरणीपुत्रो होरायामर्कनन्दने(नः) ।
न च देवगुरुः केन्द्रे मृत्युगर्भः प्रसूयते ॥ ८४ ॥

### पुनरपि सद्योमरणयोगः

होरानिधनास्तगते(तैः) पापैः क्षीणे व्यये स्थिते चन्द्रे ।
जातस्य भवति मरणं [सद्यः] केन्द्रे न चेत्तु शुभाः ॥ ८५ ॥

### मासचतुष्टयमरणयोगः

प्रबलैर्वीक्षितः पापैर्होरेशे(शो) निधनस्थिते(तः) ।
मासैश्चतुर्भिः पञ्च स्यान्मरणाय भवेद्ध्रुवम् ॥ ८६ ॥

---

१. अत्र "मासैश्चतुर्भिर्जातस्य मरणाय भवेद्ध्रुवं" इति सारावल्यभिमतः पाठः ।

जन्मेश्वरः क्रूरयुतेऽक्षितश्चेत्
छिद्रस्थितो हन्ति चतुर्थमासे ।

अष्टममासमरणयोगः

व्ययाधिपस्तन्मृतिगश्च पापैः
युतेक्षितश्चेन्मृतिरष्टमासे ॥ ८७ ॥

वत्सरत्रयमरणयोगः

लैग्नाधिपतिश्चन्द्रो विगलितदेहो विलग्नस्थः ।
क्रूरैः सकलैर्दृष्टः त्रिभिर्वर्षैस्तु मारयति ॥ ८८ ॥

॥ अथ सर्वरिष्टभङ्गयोगाः ॥

ग्रहकृतमखिलमरिष्टं यदि शुभ(सं)वीक्षितः कर्ता ।
नाशमुपयाति नियतं यदि सौम्यग्रहः केन्द्रे ॥ ८९ ॥

केन्द्रोपगोऽपि बलवान् स्फुरदंशुमाली
स्वर्लोकराजसचिवः शमयेदवश्यम् ।
एको बहुर्न(हनि) दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव शूलधरप्रणामः ॥ ९० ॥

सौम्यग्रहैरतिबलैर्विबलैश्च पापैः
लग्ने च सौम्यभवने शुभदृष्टियोगे ।
सर्वापदादि(वि)रहितो भवति प्रसूतः
पूजाकरः खलु यदा(था) दुरितं ग्र(तैर्ग्र)हाणाम् ॥ ९१ ॥

---

१. अत्र " लग्नाधिपतेश्चन्द्रो मरणपदस्थोऽतिकृष्णतां यातः । क्रूरैः सकलैर्दृष्टो न शुभैः सर्वैस्त्रिभिस्तु मारयति " इति सारावली ।

२. अत्र " लग्नोपगोऽपि इति पाठः सारावलीसंमतः ।

३. अत्र " चक्रधरप्रणामः " इति सारावली ।

बुधभार्गवजीवानामेकोऽपि केन्द्रमाश्रितो बलवान् ।
जातस्य[1] क्रूरसहायः सद्यो रिष्टो भवति भङ्गाय ॥ ९२ ॥

लग्नेशो बलयुक्तश्चेत्त्रिकोण(णे) केन्द्रगोऽपि वा ।
अरिष्टयोगजातोऽपि बालो जीवति निश्चयम् ॥ ९३ ॥

यस्य जन्मनि तुङ्गस्थाः स्वक्षेत्रस्था अपि ग्रहाः ।
चिरायुषं शिशुं जातं कुर्वन्त्यत्र न संशयः ॥ ९४ ॥

एक एव हि लग्नेशः केन्द्रसंस्थो बलान्वितः ।
हन्ति रिष्टचयं पुंसां पिनाकी त्रिपुरं यथा ॥ ९५ ॥

नाशयेदखिलान्दोषान्यत्रैकादशगो गुरुः ।
गङ्गायां स्नानतो भक्त्या सर्वपापहरा इ(हृतेरि)व ॥ ९६ ॥

एकोऽपि यदि केन्द्रस्थो भार्गवो वा गिरां पतिः ।
नवमे वा सुतस्थाने सर्वरिष्टं न कारयेत् ॥ ९७ ॥

किं कुर्वन्ति ग्रहाः सर्वे यस्य केन्द्रे बृहस्पतिः ।
मत्तकुञ्जरयूथोऽपि सिंहेनैकेन हन्यते ॥ ९८ ॥

एकोऽपि केन्द्रभवने नवपञ्चमे वा
भास्वान्मयूखविमलीकृतदिग्विभागः ।
निश्शेषदोषमपहृत्य शुभ(भं) प्रसूतं
दीर्घायुषं विगतरोगभयं करोति ॥ ९९ ॥

इति सर्वारिष्टभङ्गयोगाः

॥ इति श्रीमद्दैवज्ञाभरणे रिष्टविवेचनं नाम षष्ठः प्रकाशः ॥

आदितः श्लोकसङ्ख्या ३३८

---

१. अत्र "क्रूरैस्त्रिलाभषष्ठैः सद्यो रिष्टस्य" इति पाठः साधुः ।

॥ श्रीः ॥

# ॥ अथ सप्तमः प्रकाशः ॥

## ॥ पितुरिष्टविवेचनम् ॥

सूर्यादष्टमराशिस्थः प्रसवे सौरिगेहतः ।
शुभैरीक्षणमाणश्च पितुः सद्यो मृतिप्रदः ॥ १ ॥

### विषाणशस्त्रजपितृमरणयोगः

चरराशिगते भानौ जन्मनि क्रूरसंयुते ।
विषाणशस्त्रजो मृत्युः पितुर्भवति निश्चयः ॥ २ ॥

### पितृमरणयोगाः

सूर्यः पापसमायुक्तः सूर्यस्तु पापमध्यगः ।
सूर्यस्य सप्तमे पापाः पितुर्मरणमादिशेत ॥ ३ ॥

### परदेशगते पितरि जननयोगाः

चरराशिगते सूर्ये लोहिताङ्गविलोकिते ।
दिने जातस्य पितरं जानीयात्परदेशगम् ॥ ४ ॥

सौरा( रेंऽ )ङ्गारकसन्दृष्टे चरमे रात्रिजन्मनः ।
अचिरं पितरं विन्द्यात्परदेशे न संशयः ॥ ५ ॥

### परदेशे पितृमरणयोगः

शनिभौमयुते भानौ यत्र कुत्रापि तिष्ठति ।
परदेशे प्रसूतेस्तु मरणं पितुरुच्यते ॥ ६ ॥

---

१. अत्र "सूर्याष्टमे भौमयमौ तु युक्तौ सौम्यैरदृष्टौ पितुरत्ययाय" इति यवनेश्वरः । अतः "सौरिणा युतः । शुभैरनीक्ष्यमाणश्च पितुर्भौमो मृतिप्रदः" इवि पाठेन भाव्यमिति भाति ।

### पित्रा साकं शिशुमरणयोगः

कर्मस्थानगतः सौरिः पितृस्थाने च चन्द्रमाः ।
भौमोऽपि सप्तमस्थाने सपितुर्मरणं शिशोः ॥ ७ ॥

लग्ने वा पञ्चमे वापि नवमे द्वादश(शे) स्थितः(ताः) ।
भानुभौमार्कजाश्चापि पितॄन्हन्ति न संशयः ॥ ८ ॥

### पितुः सद्योमरणयोगाः

द्वादशे मन्दसूर्यौ च क्षीणचन्द्रस्तु सप्तमे ।
पितुर्मरणकं सद्यः शुभदृष्टे त्रिवर्षके ॥ ९ ॥

लग्ने चन्द्रनिरीक्ष्ये तु क्रूराः शुभविवर्जिताः ।
पितुर्मरणमेव स्यान्न केन्द्रे देवपूजितः ॥ १० ॥

क्रूरेण युक्तश्चरराशिगश्चेत्
तातं रविर्हन्ति विषाम्बुशस्त्रैः ।
सूर्यः स्मरस्थोऽहनि सौम्यदृष्टे ।
विदेशवासं पितरं व्यनक्ति ॥ ११ ॥

परतः पृष्ठतो भानोर्यदि पाप(पः) समाश्रितः ।
सोऽप्यनिष्टकरः पित्रोः न हि केन्द्रगतो गुरुः ॥ १२ ॥

जायायां जाय(विद्य)मानाश्च शिखिभौमदिवाकराः ।
एकराशिगते जीवे पितुर्मरणकारकाः ॥ १३ ॥

### दिनत्रये पितृमरणयोगः

केतुश्चतुष्टये पुत्रं नवमे पितरं तथा ।
हन्याद्राहुः सप्तमगः पापदृष्टे(ष्टो) दिनत्रये ॥ १४ ॥

---

१. अत्र "द्वादशे चन्द्रसूर्यौ च" इति यवनेश्वरः । तन्मते क्षीणचन्द्रस्तु सप्तमे इति योगान्तरम् ।

२. अत्र "लग्नचन्द्रौ निरीक्षन्ते" इति पाठः साधुः ।

३. अत्र "सूर्ये चरस्थेऽहनि भौमदृष्टे" यवनेश्वरः ।

### पितुः बन्धनयोगः

लग्नाधिपे रिपुक्षेत्रे क्रूरग्रहनिरीक्षिते ।
पितुर्बन्धनयोगश्च शुभदृष्टे प्रणश्यति ॥ १५ ॥

लग्नस्थाने यदा सौरी रिपुस्थाने च चन्द्रमाः ।
भौमोऽपि सप्तमस्थाने म्रियते जातकृत्पिता ॥ १६ ॥

### दिनसप्तके पितृमरणयोगः

हिबुके शनिभानू वा सप्तमे यदि भानुजः ।
पिता म(तुर्म)रणमाचष्टे सप्तरात्रान्न संशयः ॥ १७ ॥

### पुनरपि पितृबन्धनयोगः

पापर्क्षगौ सूर्ययमौ त्रिकोणे
पापौ पितुर्बन्धनरोगदाता(दौ तौ) ।
राहुर्धनस्थो नवपञ्चमस्थः
क्रूरैश्च दृष्टः पितृहेति केचित् ॥ १८ ॥

### पुनरपि सपितृशिशुमरणयोगः

निधने च गते सूर्ये सौरिभौमेऽक्षिते यदि ।
नेक्षिते गुरुशुक्राभ्यां सपिता म्रियते शिशुः ॥ १९ ॥

### पुनरपि दिनसप्तके पितृमरणयोगः

अष्टमस्थो यदा चन्द्रो गुरुराहू द्वितीयगौ ।
सौरिभौमस्थि(यु)तेऽमित्रे पितृहा सप्तवासरात् ॥ २० ॥

---

१. अत्र " क्रूरर्क्षगतावशोभनौ सूर्यात् द्यूननवात्मजस्थितौ । बद्धस्तु पिता विदेशगः स्वे वा राशिवशादथो पथि " इति वराहमिहिरः । तद्रीत्या " सूर्यमदत्रिकोणे " इति पाठः कल्पनीय इति भाति ।

२. अत्र " राहुर्बलिष्ठो " इति यवनेश्वरः ।

पुनरपि पितुः सद्योमरणयोगाः

लग्नाष्टमगते भौमे द्वादशे पापद्वित्रिगे(संगते) ।
पितृघाती भवेन्नित्यं शुभैर्यदि न दृश्यते ॥ २१ ॥

सूर्याच्च सप्तमे राशौ शनिभौमौ यदि स्थितौ ।
तदा पितृवधो ज्ञेयस्तयोर्मध्येऽथवा रविः ॥ २२ ॥

कुजेन संयुतो भानुः शनिना संयुतो(वीक्षितो) यदि ।
शनिना संयुतो वापि कुजदृष्टः पितुर्मृतिः ॥ २३ ॥

॥ इति श्रीदैवज्ञाभरणे पितृरिष्टविवेचनं नाम सप्तमः प्रकाशः ॥

आदितः श्लोकसंख्या ३६१

---

॥ श्रीः ॥

# ॥ अथाष्टमः प्रकाशः ॥

## ॥ मातृरिष्टविवेचनम् ॥

पितृरिष्टं कृतं पूर्वं मातृरिष्टं तथोत्तरम् ।

**मातृकारकज्ञानम्**

दिवा सूर्यो(शुक्रो) यथा माता निशि माता च चन्द्रमाः ॥ १ ॥

**मातृमरणयोगः**

प्रसवे रात्रिसमये चन्द्रे पापगृहे स्थिते ।
माता च म्रियते तत्र यदि पापैः समन्विते ॥ २ ॥

अथवा क्षीणचन्द्रं च पापाः पश्यन्ति सर्वदा ।
शुभग्रहा न पश्यन्ति माता च म्रियते ध्रुवम् ॥ ३ ॥

निधनारिगतश्चन्द्रो भौमो वा सप्तमे यदि ।
स तु मातृवधो ज्ञेयो भौमार्कौ संयुतौ यदि ॥ ४ ॥

**दिनसप्तके मातृमरणयोगः**

चन्द्रः पापसमायोगो लग्नात्केन्द्रगतो यदि ।
तदा मातृवधो ज्ञेयः सप्ताहान्नात्र संशयः ॥ ५ ॥

**परदेशगे पितरि मातृमरणयोगः**

चन्द्राष्टमगते भौमे शत्रुस्थे क्रूरवीक्षिते ।
मातुस्तस्य भवेद्धानिः पिता तस्य विदेशगः ॥ ६ ॥

**अनिर्दिष्टकालमातृमरणयोगाः**

लग्नाचतुर्थगः पापो यदि स्याद्बलवत्तरः ।
नूनं मातृवधं कुर्याचन्द्रश्चैव विशेषतः ॥ ७ ॥

शनिमङ्गलयोर्मध्ये यदि तिष्ठति चन्द्रमाः ।
तदा मातृवधो ज्ञेयो भौमार्कौ संयुतौ यदि ॥ ८ ॥

### दशदिनान्तर्मातृमरणयोगाः

दशमे च यदा भौमो नीचशत्रुगृहे स्थितः ।
सूतकेऽपि तदा मृत्युर्भवेन्मातुर्न संशयः ॥ ९ ॥

चन्द्रः पापसमायुक्तः षष्ठे वा निधने स्थितः ।
स एव पापमध्यस्थः मातृहा सप्तवासरात् ॥ १० ॥

चन्द्रे पापान्तरस्थे तु चतुर्थे पापसंयुते ।
न देवगुरुणा दृष्टे मातृहानिर्न संशयः ॥ ११ ॥

षष्ठाष्टमव्ययस्थाने क्षीणेन्दौ पापसंयुते ।
रविभौमार्किसन्दृष्टे मातृहा सप्तवासरात् ॥ १२ ॥

प्रसवे च दिवाभागे शुक्रे च पापसंयुते ।
अथवा पापदृष्टे च माता हि म्रियते ध्रुवम् ॥ १३ ॥

### सप्तसप्ततिदिनान्तर्मातृमरणयोगः

चन्द्रस्य सप्तमे राशौ मन्दभौमौ स्थितौ यदि ।
सप्तसप्ततिऋक्षान्ते मातुर्मरणमादिशेत् ॥ १४ ॥

### दिनसप्तके मातृमरणयोगः

उदये शनिभानू च सप्तमे यदि भूमिजः ।
मातुर्मरणमाचष्टे सप्तरात्रे न संशयः ॥ १५ ॥

### सशिशुमातृमरणयोगाः

लग्नेन्दुः(न्दू) पापमध्यस्थो(स्थौ) पापे उदयपुत्रगे ।
अदृष्टे बलिभिस्सौम्यैः हता माता सहार्भकम् ॥ १६ ॥

कृष्णपक्षे दिवाभागे सप्तमे गुरुभार्गवौ ।
सप्तमे चाष्टमे चन्द्रे सप्तरात्रं न जीवति ॥ १७ ॥

चन्द्राष्टमगतः पापः शत्रुगो रिपुवीक्षितः ।
माताता(तुस्त)स्य मृतिश्चैव पिता विदेशगो ध्रुवम् ॥ १८ ॥

### गर्भे शिशुमरणयोगः

कुजचन्द्रग(यु)ते लग्ने द्वादशे पापसंस्थिते ।
सप्तमस्थे यदा सोमे म्रियते गर्भगः शिशुः ॥ १९ ॥

### पुनरपि सशिशुमातृमरणयोगाः

पापमध्यगते चन्द्रे तस्मा(स्मिं)ल्लग्नसमाश्रिते ।
सप्ताष्टमे च पापे च मात्रा सह मृतः शिशुः ॥ २० ॥

चन्द्रे पापान्विते ग्रस्ते यदि लग्ने समाश्रिते ।
अष्टमस्थानगे भौमे मात्रा सह मृतः शिशुः ॥ २१ ॥

### पुनरपि दिनसप्तके मातृमरणयोगाः

चन्द्रः पापसमायुक्तश्चन्द्रः पापस्य मध्यगः ।
चन्द्रस्य सप्तमे पापा मातृहा सप्तवासरान्(त्) ॥ २२ ॥

चन्द्रात्स्मरे मातृवधाय पापाः
सोमाद्रवेर्वा दशमे सपापः(पे) ।
शुक्राद्रविः पञ्चमगः सुरेश-
मन्त्रीक्षितो वा मरणाय मातुः ॥ २३ ॥

हिबुके शनिभानौ(नू) च सप्तमे यदि भूमिजः ।
मातुर्मरणमाचष्टे सप्तरात्रान्न संशयः ॥ २४ ॥

### पितृमातृद्वयमरणयोगः

लग्नं गते यदा जीवे षष्ठाय(ष्ठस्थो) यदि चन्द्रमाः ।
पितृमातृद्वयं हन्ति द्रष्टा चे(दृष्टश्चे)द्रविसूनुना ॥ २५ ॥

**पुनरपि मातुः दिनसप्तके मातृमरणयोगः**

केन्द्रत्रिकोणगः पापो मातृहा सप्तवासरान्(त्) ।

**पुनरप्यनिर्दिष्टकालमातृमरणयोगः**

सपापो भार्गवः पापो हिबुके मातृनाशकृत् ॥ २६ ॥

लग्नाच्चतुर्थगः पापो यदि स्याद्बलवत्तरः ।
तदा मातृवधं कुर्यात्तले(त्के)न्द्रे स्व(ष्व)परो यदि ॥ २७ ॥

**पुनरपि विदेशगे पितरि मातृमरणयोगः**

नीचराशिगते चन्द्रे भौमे वा सप्तमे स्थिते ।
माता त(तुस्त)स्य विनाशाय पिता तस्य विदेशभाक् ॥ २८ ॥

**मातृपितृमरणयोगौ**

लग्नाच्चतुर्थे रविजेऽथ भौमे
कर्मस्थिते मातृवियोगदुःखम् ।
ददाति शीघ्रं खलु सप्तमस्थ-
स्तातस्य मृत्युः खलु लग्नसंस्थः ॥ २९ ॥

शशाङ्कः पापलग्ने वा अष्टमे रविनन्दनः ।
पितृमातृमहद्दुःखं मासमेकं न जीवति ॥ ३० ॥

**पुनरपि दिनसप्तके मातृमरणयोगः**

चन्द्राच्चतुर्थगः पापो मृत्युगो भूमिनन्दनः ।
पञ्चमस्थो यदा सूर्यो मातृहा सप्तवासरान्(त्) ॥ ३१ ॥

**पुनरपि सशिशुमातृमरणयोगः**

षष्ठे पापयुतश्चन्द्रो हन्ति पुत्रं समातरम् ।

**मातृमरणयोगः**

सप्तमे तु यदा पापे इहान्या(ल्येऽन्यो) मातरं तथा ॥ ३२ ॥

**॥ इति श्रीदैवज्ञाभरणे मातृरिष्टविवेचनं नामाष्टमः प्रकाशः ॥**

**आदितः श्लोकसंख्या ३९२**

---

॥ श्रीः ॥

# ॥ अथ नवमः प्रकाशः ॥

## ॥ अथ लग्नभावविवेचनम् ॥

अतः परं भावफलं जनानां
भावाधिपेन स्थितखेचरेण ।
पूर्वं प्रयत्नान्मुनिभिर्यदुक्तं
फलाफलं दैवविदानुसार(र्ये)म् ॥ १ ॥

एकं फलं भावयुगेन चोक्तं
यत्पूर्वमाचार्यकृतं यथेष्टम् ।
तत्तत्फलं चैकगृहेण युक्तं
तथापि बोध्यं सकलं जनानाम् ॥ २ ॥

## ॥ अथ देहपरिमाणज्ञानम् ॥

### समदेहज्ञानम्

तनुस्थानाधिपे सूर्ये सबले केन्द्रकोणगे ।
भौमेनापि युते दृष्टे समदेहं विनिर्दिशेत् ॥ ३ ॥

एवं चन्द्रादिखेटानां तत्तद्ग्रहस्वरूपतः ।
तत्तद्बलवशाद्दृष्ट्या स्वरूपं तु विचारयेत् ॥ ४ ॥

### वामनजन्मज्ञानम्

पृष्ठोदयगते चन्द्रे जलस्थे कि(ख)लवीक्षिते ।
क्रियस्थ(स्थो) लग्नपे(पो) यस्य वामनो जायते नरः ॥ ५ ॥

कुजराहुयुते लग्ने कुब्जाङ्गो भवति ध्रुवम् ।

### पित्रादिदेहपरिमाणज्ञानम्

एवं पित्रादिभावेषु चिन्तनीयं मनीषिभिः ॥ ६ ॥

अत्यन्तवीर्यस्य समानदेहं
खेटस्य लग्नांशपतुल्यगात्रम् ।

इति देहपरिमाणज्ञानम्

## ॥ अथ देहवर्णज्ञानम् ॥

चन्द्रस्थितांशेन(श)समानवर्णं
मित्रा(मूर्धा)दिभेदैर्मुनयो वदन्ति ॥ ७ ॥

लग्ने लग्नेशसंबन्धे यद्गृहस्थितनायके ।
लग्नाधिपो[थ] यद्वर्णस्तद्वर्णो देह उच्यते ॥ ८ ॥

लग्ने भास्करभौमश्च(माढ्ये) शुभग्रहसमन्विते ।
शुभैरीक्षणयोगे च गौराङ्गं च(ङ्गश्च) भवेन्नरः ॥ ९ ॥

तनौ तमश्च मन्दश्च कृष्णाङ्गं(ङ्गो) जायते नरः ।
शुभग्रहैर्युते दृष्टे वैपरीत्यं फलं भवेत् ॥ १० ॥

पापे विलग्नेऽशुभवीक्षिते च
लग्नेश्वरे नीचगृहे तदंशे ।
धूमादियोगे विकले तदीशे
करालवर्णं कथयन्ति तज्ज्ञाः ॥ ११ ॥

जीवेन्दुभृगुपुत्राणां द्रेक्काणे गौरवर्णता ।
कृष्णत्वं सौरिद्रेक्काणे त्वन्येषु(न्यांशे) मिश्रवर्णता ॥ १२ ॥

देहाधीशस्य वर्णो भवति च
नियतं यो बलस्तु(ली तु) ग्रहस्य( हः स्यात् )
राश्यंशालभ्य(धीश)वर्णं बलवति
विलशं तादृशं(कुलजात्यादिकं) बुद्धियोगम् ॥ १३ ॥

### भ्रात्रादिवर्णज्ञानम्

एवं भ्राता मातृपितृस्वदारं(राः)
पुत्रं(त्रो) वाद्यं मातुलं(लः) कीर्तिशत्रुम्( त्रू ) ।

सर्वं तत्र ज्ञायते दृष्टिसंस्था
वीर्याधिक्याज्ज्ञायते व(निभिर्व)र्णधीरैः ॥ १४ ॥

इति देहवर्णज्ञानम्

## ॥ अथ जातकस्य पुंस्त्वादिज्ञानम् ॥

यस्मिन् लग्ने भवेज्जातस्तल्लग्नाधिपतिस्त्रि(र्द्वि)धा ।
ओजर्क्षे तु भवेत्पुत्रो युग्मर्क्षे कन्यका भवेत् ॥ १५ ॥

समराशौ स्थिते लग्ने समराशौ च भार्गवे ।
तदा च कन्यका जाता अन्यथा पुरुषो भवेत् ॥ १६ ॥

पुंवर्गे लग्नगते पुंग्रहदृष्टे बलान्विते पुरुषः ।
युग्मे स्त्रीग्रहदृष्टे स्त्रीग्रहयुक्ते [च] कन्यका जाता ॥ १७ ॥

पुंलग्ने पुरुषग्रहेऽक्षितयुते पुंवर्गसंस्थे ग्रहे ।
जीवे लग्नसुताङ्कगे यदि सुतः तद्व्यत्यये पुत्रिका ॥ १८ ॥

उदये विषमे सूर्ये गुरौ च विषमे पुमान् ।
युग्मोदये समे राशौ शीतरश्मौ च भार्गवे ॥ १९ ॥

जायते कामिनी तत्र ज्योतिषाणां सुनिश्चयात् ।
व्यत्यये सति चैतेषां यदि लग्नाच्छनैश्चरे ॥ २० ॥

चरस्थे स्थिरसंस्थे वा क्रमेण पुरुषस्त्रियौ ।
स्त्रीभागे तु भवेज्जाया पुंभागे पुरुषो भवेत् ॥ २१ ॥

स्त्रीद्रेक्काणबले क्वापि पुंग्रहस्थितदर्शने ।
पुंभागेऽपि गते क्वापि पुत्रमेति मयोदितम् ॥ २२ ॥

क्लीबजननयोगाः

सौरिदृष्टे बुधयुते शुभहीने भवेद्यदि ।
बुधमन्दगृहे जातः क्लीबो भवति नान्यथा ॥ २३ ॥

सषित(सिते च) मन्दकर्मस्थे तृतीये लाभगे यदि ।
नपुंसकं च नियतं त्वन्यथा युवती भवेत् ॥ २४ ॥

शुक्ररिप्फे रिपुगृहे सूर्यपुत्रः स्थितो यदि ।
नपुंसकं विजानीयाज्जातश्चेद्यदि मानवः ॥ २५ ॥

नपुंसके दारपतौ चरस्थे
नपुंसकः(कैः) खेचरसंयुतश्चे(णैर्युते चे)त् ।
सर्वेषु( र्वैश्च )शास्त्रे(स्त्रैः) कथितः(तं) प्रशस्तो(स्तं)
नपुंसयोगं मुनयो वदन्ति ॥ २६ ॥

अन्योन्यं पश्यतश्चेत्तरणिहिमकरौ तत्तनूजौ मिथो वा
भूसूनुः पश्यतीनं समभवनगतेस्तुङ्गचन्द्रो[1] यदौजे ।
[2]ओजर्क्षे युग्मराशौ हिमकरशशिजौ भूसुतेनेऽक्षितौ चेत्
पुंराशौ लग्नशुक्रस्त(क्रौ त)दनु हिमकरः क्लीबयोगाः षडेते ॥ २७ ॥

इति बालकस्य पुंस्त्वादिज्ञानम्

## ॥ अथ ब्राह्मणादिजातिज्ञानम् ॥

शुभ(ग्रह)स्य द्विजस्यालये लग्ननाथः
तदा विप्रजातिस्तथोच्चे तु केन्द्रे ।
तदा क्षत्रियः स्याद्यदा क्षत्रिपक्षे(यर्क्षे)
परिक्षीणवीर्ये तदा शूद्रजातिः ॥ २८ ॥

लग्नेशे स्वगृहेऽथवा शुभगृहे जातो भवेद्ब्राह्मणः ।
क्षत्रः केन्द्रगतेऽथवाऽरिभवने शूद्रो भवेद्दुर्बलः(ले) ॥ २९ ॥

यदा चन्द्रयोगी तदा वैश्यजातिः
परिक्षीणवीर्येत्व(र्येस्त्व)सौ लग्ननाथः ।

---

१. तं लग्नचन्द्रौ इति पाठः साधुः ।

२. अत्र "युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेऽक्षितौ" इति वराहमिहिरवाक्ये चन्द्रस्य युग्मे, बुधस्य विषमे च स्थितिरुक्ता । अत्र तु तद्वैपरीत्यमिति भेदः ।

यदा मन्दयोगी तदा चान्त्यजातिः
विना देव(नोदेन) सर्वं विचिन्त्यं(न्त्य) प्रवाच्यम् ॥ ३० ॥

तनुभावगतो जीवः शुक्रेण संयु(सहि)तोऽपि वा ।
चन्द्रेण वीक्षितो यत्र ब्राह्मणो जातिनिश्चयः ॥ ३१ ॥

तनुभावगते शुक्रे धर्मस्थानसमन्विते ।
पञ्चमाधिपदृष्टे वै ब्राह्मणो जातिनिश्चयः ॥ ३२ ॥

तनुस्थानाधिपे स्वर्क्षे राज्याधिपसमन्विते ।
चेष्टाधिपतिदृष्टे च ब्राह्मणो जातिनिश्चयः ॥ ३३ ॥

तनुभावाधिपे सूर्ये पञ्चमे गुरुसंयुते ।
भृगुणा वीक्षिते य(त)त्र ब्राह्मणो जातिनिश्चयः ॥ ३४ ॥

लग्नाधिपे भौमयुते मन्देन युतवीक्षिते ।
भृगुणा वीक्षितो(ते) य(त)त्र क्षत्रियो जातिनिश्चयः ॥ ३५ ॥

बुधेन्दुसंबन्धितया(योऽ)दयाधिपः
शुभश्च केन्द्रोच्चगृहं समाश्रितः ।
करोति[1] जातं करणादपोद्भवं
विना बुधेन्दुं(न्दू) नृपवंशसंभवम् ॥ ३६ ॥

लग्नाधिपे सौम्ययुते चन्द्रः केन्द्रस्थितो यदि ।
राहुणा वीक्ष्यते यत्र वैश्यजातिर्नरो भवेत् ॥ ३७ ॥

लग्नाधिपे राहुयुते मन्देन युतवीक्षिते ।
भृगुणा संयुते वापि शूद्रजातिर्नरो भवेत् ॥ ३८ ॥

## संकरजन्मयोगः

गुरुराहुय(हुयु)ते लग्ने लग्नेशे बलवर्जिते
जातं सङ्करतो जातं ब्रूयाद्वान्यं वदेत्खलु ॥ ३९ ॥

---

१. अत्र करोति जातं किल पादसंभवं इति पाठः साधुः ।

दासीपुत्रयोगः

द्वादशस्थानसंस्थे च शुक्रे शनिनवांशके ।
दासीपुत्रं तदा जातं वदन्ति यवनाः खलु ॥ ४० ॥

इति ब्राह्मणादिजातिज्ञानम्

## ॥ अथ शरीरपुष्टिज्ञानम् ॥

लग्नेश्वरे केन्द्रगते स्वतुङ्गे
लग्ने च सौम्यग्रहदृष्टियोगे ।
शरीरपुष्टिं कथयन्ति तज्ज्ञा
जातस्य नित्यं मुनयः प्रवीणाः ॥ ४१ ॥

अतिस्थौल्ययोगः

लग्ने गुरौ तेन निरीक्षिते वा
जलर्क्षगे वापि जले विलग्ने ।
सौम्यान्विते शोभनखेचरेन्द्रैः
दृष्टे त्वतिस्थूलमुदाहरन्ति ॥ ४२ ॥

जलगेहे(खेटे) जलर्क्षे वा जलराश्यंशगेऽपि वा ।
जलराशिगतो(ते) वापि देहपुष्टत्वमाप्नुयात् ॥ ४३ ॥

लग्नाधिपे वा जलराशिसंस्थे
शुभान्विते तोयखगैः प्रदृष्टे ।
लग्ने शुभक्षेत्रगतेऽपि चैवं
लग्नेश्वरस्थांशपतौ जलर्क्षे ॥ ४४ ॥

तुन्दिलयोगः

लग्ने जलर्क्षे जलखेटयुक्ते
लग्नेश्वरे वा यदि तोयराशौ ।
निशाकरे तोयगृहे च पूर्णे
गात्रे तदा तुन्दिलगात्रयष्टिम् ॥ ४५ ॥

इति शरीरपुष्टिज्ञानम्

## ॥ अथ देहकार्श्यज्ञानम् ॥

लग्नेशो दुर्बलो यस्य शुष्कराशिसमन्वितः ।
कृशगात्रो(त्रं) भवेत्तस्य सदा(चा)लस(स्य)समन्वितः ॥ ४६ ॥

शुष्के खगे लग्नगते विलग्ने
शुष्के तदा देहकृशत्वमाहुः ।
लग्नेश्वरे शुष्कगते तथैव
शुष्कग्रहाणां भवनस्थिते वा ॥ ४७ ॥

### अतिकार्श्ययोगः

लग्नाधिपे नाशगते तु शुष्को(ष्के)
राशौ तनौ कार्य(र्श्य)मतीव कष्टम् ।
लग्नाधिपस्थांशपराशिनाथः
शुष्कग्रहः स्यात्तनुशौष्क(ष्क्य)माहुः ॥ ४८ ॥

### दुर्बलाङ्गयोगः

सराश्यधिपलग्नेशौ(शः) षष्ठमाष्ट(ष्ठाष्टम)व्ययस्थितौ(तः)
दुर्बलाङ्गो भवेज्जातो नरश्चेन्नात्र संशयः ॥ ४९ ॥

### स्थूलमध्यकृशयोगाः

शनीन्दु( न्दू ) जीवसूर्यज्ञाः सिताहिकुजकेतवः ।
लग्नस्थिता वा दृष्टा वा स्थूलमध्यकृशाः क्रमात् ॥ ५० ॥

### इति शरीरकार्श्यज्ञानम्

## ॥ शरीरसौख्ययोगाः ॥

लग्नेश्वरेणापि युते च सौम्ये
सौम्येऽथवा पश्यति लग्नभावम् ।
केन्द्रत्रिकोणोच्चगते तदीशे
शरीरसौख्यं प्रवदन्ति जातम् ॥ ५१ ॥

तनुस्थानाधिपे स्वोच्चे मित्रर्क्षे स्वगृहे यदि ।
देहसौख्यमवाप्नोति भार्गवो(वे) नान्यथा क्वचित् ॥ ५२ ॥

## ॥ अथ शरीरसौख्याभावयोगाः ॥

देहाधिपः पापयुतोऽष्टमस्थो
व्ययारिगो वाङ्गसुखं निहन्ति ।

प्रोक्तफलानामितरभावेष्वतिदेशः

सर्वत्र भावेष्वपि योजनीय-
मेवंविधैर्भा(र्धं भा)ववशात्फलं हि ॥ ५३ ॥

षष्ठाष्टमव्ययेश(यस्थ)श्चेत्सपापो देहनायके(कः) ।
अष्टसप्तमनाथो वा देहसौख्यं न लभ्यते ॥ ५४ ॥

सपापो लग्नपो लग्ने बलहीनो भवेद्यदि ।
व्याधिमान्बलहीनोऽपि केन्द्रे वाथ त्रिकोणपाःप(:) ॥ ५५ ॥

क्रूरालये रिपुगृहेऽप्यथवा सुनीचे

इति शरीरसौख्याभावयोगाः

क्रूरेऽक्षिते यदि युते व्ययरन्ध्रसंस्थे
षष्ठं गते तनुपतौ तनुभागगे(पे) वा
जा[1]तो नराणां न च देहसौख्यम् ॥ ५६ ॥

तनुस्थानाधिपे नीचे शत्र(त्रु)क्षें धनसंयुते ।
तृतीये पापसंयुक्ते न देह(हे) सौख्यमाप्नुयात् ॥ ५७ ॥

इति शरीरसौख्याभावयोगाः

## ॥ क्रोधयोगाः ॥

केन्द्र(न्द्रे) त्रिकोणे देहेशो(शे) विना रोगं च कोपवान् ।
देहेशस्थितभावेशं(शे) प्रधानस्थो(स्थे)ऽपि कोपवान् ॥ ५८ ॥

---

१. जातो नरोऽनुभजते न च देहसौख्यम् इति पाठः साधुः ।

लग्नेश्वरे भौमयुतेऽप्यथवा लग्नसंस्थिते ।
क्रोधयुक्तो भवेन्नृणां शनिराहुग्रहे तथा ॥ ५९ ॥

गुरुसौम्यौ तु लग्नस्थौ सप्तमस्थोऽपि चन्द्रमाः ।
धनवांस्तु महात्यागी चप(सुफ)लान्वितकोपवान् ॥ ६० ॥

देहाधिपः पापयुक्तः षष्ठाष्टमव्यये स्थितः ।
स देहदुःखमाप्नोति शत्रुपेन तु कोपवान् ॥ ६१ ॥

**सञ्चारशीलयोगाः**

लग्ने चरे तद्भवनेश्वरे वा
तत्र स्थिते सञ्चरति प्रजातः ।
सञ्चारशीले श(लब्ध)रभे विलग्ने
लग्नांशके चैवमुदाहरन्ति ॥ ६२ ॥

लग्ने चरे वित्तपतौ चरस्थे
सञ्चारशीलः खलु जातकः सः ।

**गंभीरगमनयोगः**

लग्नेश्वरे तुङ्गगते बलाढ्ये
गम्भीरगामी मुनयो वदन्ति ॥ ६३ ॥

## ॥ अथ मूर्धचिन्ता ॥

लग्ने पञ्चघटीमिते खलु बृहन्मूर्धा तदूने लघुः
तेष्वन्येषु विरुद्धखेचरवशात्स्यात्तारतम्यं फले ।
मन्दे लग्नगते च,मूर्ध्नि पतनं वाताग्निशस्त्रैर्व्रणं
भौमे पापयुतेऽक्षिते च तनुपे तस्मिन् शिरा(ला)चैर्व्रणम् ॥ ६४ ॥

---

१. अत्र "मन्दे लग्नगते च मूर्ध्नि पतनाद्वाताच्छिलाद्यैर्व्रणं भौमे पापयुतेऽ तनुपे क्ष्वेलाग्निशस्त्रैस्तथा" इति पाठः साधुः ।

लग्नेश्वरे भूमिसुते तनुस्थे
पापान्विते पापविलोकिते वा
[1] .... .... .... ... ....
.... .... .... .... .... ॥ ६५ ॥

इति मूर्धचिन्ता

॥ प्रकाशाप्रकाशयोगाः ॥

तनुस्थानाधिपे केन्द्रे कोणे लाभस्थितो(ते) यदि ।
कीर्तिमान्धनवान्सोऽपि नृपपूजा(ज्यः) प्रकाशकः ॥ ६६ ॥

तनुस्थानाधिपे षष्ठे त्वष्टमे वा व्यये स्थिते ।
निर्धनो भाग्यहीनो वा सत्वहीनोऽप्रकाशकः ॥ ६७ ॥

अथ यशश्चिन्ता

लग्नाधिपे शुभयुते यदि तुङ्गभागे
केन्द्रत्रिकोणसहिते शुभदृष्टिभागे ।
कर्माधिपेन सहिते यदि वा स्वगेहे
सद्भाग्यकीर्तिधनधान्यचिरायुरेति ॥ ६८ ॥

देवमन्दिरारामादिनिर्माणयोगाः

लग्नेशो यदि केन्द्रकोणसहितो मित्रालयस्वोच्चगो
कीर्तिस्थोऽपि विलग्नसप्तमवृये(षे) कर्कीमृगे वार्श्चि(वृश्चि)के ।
जीवो वा यदि संस्थितोऽस्य निकरं(तरां) चारामसंस्थापनं
देवागारतटाकनिर्मित(ति)महासंपूज्यता भूतले ॥ ६९ ॥

---

१. अत्र ग्रन्थपातो दृश्यते । तत्स्थाने वराहमिहिरोक्तोऽयं श्लोकः पठनीयः ।

" तस्मिन् पापयुते व्रणं शुभयुते दृष्टे च लक्ष्मादिशेत्
स्वर्क्षांशे स्थिरसंयुतेषु सहजः स्यादन्यथाऽगन्तुकः ।
मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः
सूर्ये काष्ठचतुष्पदेन हिमगौ शृंग्यब्जजोऽन्यैः शुभः ॥" इति

### पुण्यशीलयोगाः

अङ्गाधीशं(शः) स्वगेहे बुधगुरुकविभिः संयुतः केन्द्रगो वा
स्वीये तुङ्गे स्वमित्रे यदि शुभभवने वीक्षितः सत्वरूपः ।
स्यान्नूनं पुण्यशीलः सकलजनमतः सर्वसंपन्निधानो
ज्ञानी मन्त्री च सूमः(तः) सुरुचिरनयनो मानवो मानवानाम् ॥७०॥

### दुष्कीर्तियोगाः

पापे विलग्नेंऽशपतौ सराहौ
केन्द्रे स्थिते कर्मणि पापखेटे ।
नीचग्रहे लग्नगतेऽर्किदृष्टे
दुष्कीर्तियुक्तः स भवेत्तदानीम् ॥ ७१ ॥

### सुखयोगाः

तेंद्वच्चेत्तनुपश्च तत्स्वगृहपांशेशश्च चेत्त्रिशपो
द्रेक्काणे तनुपे सुखी स सुहृदो वर्गोत्तमे वोच्चगे ।

### आदिमध्यसुखयोगः

सौम्ये लग्नभवान्त्यगे च तनुपे केन्द्रे बलिष्ठे सुखं

### अन्त्यसुखयोगः

मध्याद्येर(ष्व)थ लग्नपे च शुभदे पापे च केन्द्रे धने ।

### आदिसुखयोगः

आदौ दुःखमतः सुखं त्वथ तनौ पापे शुभे वित्तगे
लाभस्थे च सुखं भवेत्प्रथमतस्तसात्परं त्वन्यथा ॥ ७२ ॥

बाल्ये सुखी स्यात्त्रिदशेन्द्रपूज्ये
केन्द्रे यदा लग्नपतौ बलाढ्ये ।

---

१. अत्र पूर्वार्धं लुप्तमिव भाति । तत्स्थाने "अंशेशो बलवान् सुखं वितनुते पापैरयुक्तेक्षितः सौम्यैर्दृष्ट्युतश्चतुष्टयसुहृत्स्वोच्चत्रिकोणाश्रितः" इति पाठेन भाव्यमिति भाति ।

शुभान्विते वा शुभदृष्टियुक्ते
स्त्रीपुत्रमित्रार्थसुखान्वितोऽयम् ॥ ७३ ॥

पशुजन्मज्ञानम्

पापा बलाढ्याः स्वगृहं प्रपन्नाः
सौम्याः स्वगेहान्तरराशियुक्ताः ।
चतुष्पदानां जननं वियोनौ
लग्ने वदन्त्यत्र विदो महान्तः ॥ ७४ ॥

पापा बलाढ्याः विफ(ब)लाश्च सौम्याः
नपुंसकः केन्द्रगते(तो) यदा स्यात् ।
दृष्टिस्तयोर्वाथ वियोनिलग्ने
चतुष्पदां जन्म वदन्ति तज्ज्ञाः ॥ ७५ ॥

लग्ने चतुष्पादधिपे स्थिते वा
दृष्टेऽथवा लग्नपतौ युते वा ।
नीचे तु स्वर्क्षे वसतौ कृते स्या-
दुच्चेऽपि जातः पशुरेव नान्यः ॥ ७६ ॥

लग्नेशो भ्रातृपो यत्र तृतीये वापि यद्भवेत् ।
लग्नाचतुर्थ(र्थे) चत्वारो देहपे संयुते(न युता) यदि
चतुष्पदा(दां) च जननं ज्ञायते जातिनिर्णयः । ॥ ७७ ॥

मेषो वृषश्च सिंहश्च लग्न(ग्नं)स्य(स्यात्.) पतिदृष्टयः(युक्) ।
तत्रे शुक्रस्य च तथा(युतौ) चतुष्पदेन(ष्पाज्जन्म) ज्ञा(जा)यते ॥ ७८ ॥

वृषेश(च) मेषलग्नेश(च) तन्त्रेण पतिपञ्चमम् ।
तत्र द्वादशचन्द्रेण शृङ्गिणां जन्तुजातयः ॥ ७९ ॥

रविहोरागते चन्द्रे चन्द्रद्रेकाणभास्करे ।
अङ्गारकनवांशे च स एव जन्तुजातकः ॥ ८० ॥

खतो(गे) दृकाणे च विलग्नभूते
    बलान्वितेनैव खगेन दृष्टे ।
राशौ चरे वा यदि वा तदंशे
    वियोनिजन्मेन(न्मैव) बुधांशके वा    ॥ ८१ ॥

### गोमहिषीमेषादिजन्मज्ञानम्

शुक्रेऽक्षिते गोजननं महिष्याः
    सूर्यात्मजेनापि युतः स दृष्टाः(ष्टः) ।
राहुध्वजाभ्यां सहितोऽथ दृष्टः
    मेषस्तु जातोऽन्यपशुस्तथान्यैः    ॥ ८२ ॥

### पशोर्वर्णबलादिज्ञानम्

बलवान्वीर्यतः खेटः तद्वर्णं तत्स्वभावतः ।
बलं रूपं वपुः स्वादि चिन्तनीयं मनीषिभिः    ॥ ८३ ॥

### प्रोक्तलग्नफलस्य भ्रातृभावादिष्वतिदेशः

लग्ने त्वेवं चिन्तनीयं सुधीभि-
    र्मूर्त्यादीनां भावतोत्थं यदुक्तम् ।
भ्रात्रादीनां भ्रातृभावानुरूपं
    मात्रादीनां भावनीयं सुधीभिः    ॥ ८४ ॥

॥ इति श्रीदैवज्ञाभरणे लग्नभावविवेचनं नाम नवमः प्रकाशः ॥

आदितः श्लोकसङ्ख्या ४७७

---

॥ श्रीः ॥

# ॥ अथ दशमः प्रकाशः ॥

## ॥ अथ द्वितीयभावविवेचनम् ॥

अथातः संप्रवक्ष्यामि धनभावफलं नृणाम् ।
मुनिना कथितं यच्च क्रमेण कथयेऽधुना ॥ १ ॥

### ॥ अथ मुखचिन्ता ॥

**मुखप्रसादयोगः**

मुखे तदीशे शुभदृष्टियुक्ते
स्वोच्चेऽथवा जन्मनि सुप्रसन्नः ।

**मुखवर्णः**

चन्द्रोऽथवा वासरनायको वा
मुखे यदा तादृशवर्णयुक्तः ॥ २ ॥

### ॥ अथ सुमुखदुर्मुखयोगाः ॥

विशालयुक्तः(वक्त्रः) परमन्त्र(त्र) नाथः(थे)
स्वोच्चे स्थिते जन्मनि सौम्यदृष्टे ।
पापग्रहैर्दुर्मुखसूक्ष्मवक्त्रः
क्रोधी च काठिन्यकुमार्गयुक्तः ॥ ३ ॥

द्वितीयाधिपतौ स्वोच्चे गुरुशुक्रयुतेऽक्षिते ।
सुवर्तुलमुखं ज्ञेयं यदि चन्द्रविलोकितः(ते) ॥ ४ ॥

द्वितीयाधिपतौ षष्ठे शनिभौमनिरीक्षिते ।
सूर्येण सहिते दृष्टे स विरूपमुखो भवेत् ॥ ५ ॥

मुखे सौम्ययुते तद्भज्जनने सुमुखो भवेत् ।
मित्रमुख्ये(युक्ते) तदीशे तु कदाचित्सुमुखो भवेत् ॥ ६ ॥

धूमादियोगेऽपि च दुर्मुखोऽसौ
लग्नार्थसौख्यायज(भ)कर्मनाथौ(थैः) ।
दृष्टे तदीशे च मुखप्रसन्नो
जातो भवत्येव हि सर्वदैव ॥ ७ ॥

इति सुमुखदुर्मुखयोगाः

## ॥ मुखरोगदन्तरोगयोगः ॥

लग्नाधिपः कुज(जः) क्षेत्रे बुधस्य यदि संस्थितः ।
यत्र तत्र स्थितज्ञेन वीक्षितो मुखरुग्भवेत् ॥ ८ ॥

राहु(हौ) केतौ शत्रुभावे स्थितेऽपि मुखरुक्तिदः( म्भवेत् ) ।
दन्ते वा जायते रोगो वदेज्ज्जो(ज्यौ)तिर्विदो जनः ॥ ९ ॥

मुखेशे पापसंबन्धे षष्ठाष्टमव्ययस्थिते ।
तद्भावे पापसंयुक्ते वक्त्रे रोगं विनिर्दिशेत् ॥ १० ॥

## ॥ अथ चक्षुश्चिन्ता ॥

### चक्षुर्लक्षणज्ञानम्

लग्ने शुभे नेत्रपतौ स्वतुङ्गे
स्वर्क्षेऽथवा जन्मनि सौम्यदृष्टे ।
तत्कारके वा शुभखेटयुक्ते
तदा शिशुर्विस्तृतरक्तनेत्रः ॥ ११ ॥

धनेशे चन्द्रसंयुक्ते धवलाक्षो भवेन्नरः ।
रविणा संयुते वापि नेत्रान्ते रक्तरेखिकाः ॥ १२ ॥

नेत्रेश्वरे तद्भवनेश्वरे[1] वा
सौम्यान्विते कारकखेचरेन्द्रे ।

१. नेत्रेश्वराश्रितभवनेश्वर इत्यर्थः ।

लग्नेश्वरेणापि युतेऽथ दृष्टे
विशालदृष्टिः स नरो विशेषात् ॥ १३ ॥

रक्तान्तनेत्रे जनने द्वितीये
कुजेन दृष्टेऽक्षिपतौ तथैव ।
तत्कारके वापि युतेऽपि दृष्टे
नीचे तदा क्रूरदशा समेते ॥ १४ ॥

व्ययेशे शुभसंयुक्ते शोभनांशसमन्विते ।
शुभखेचरसंबन्धे तन्नेत्रस्य शुभं वदेत् ॥ १५ ॥

शुक्रेण युक्तो यदि लग्ननाथो
लग्नाधिपेनापि युते त्रिकस्थे(कोणे) ।
संबन्ध(न्धि)ता स्याद्यदि देहपेन
नेत्रस्य धत्तेऽविपरीतभावम् ॥ १६ ॥

**अन्धत्वयोगाः**

तत्र[1] स्थितो चन्द्रकविनान्धो ?
जात्यन्धतां नेत्रपदेहपार्कात्(र्कैः) ।

**पित्रादीनामन्धत्वज्ञानम्**

पैत्रर्क्षनाथेन युतस्तदान्यं(ते तथैवं)
कुर्वन्ति मा(पि)त्रादिफलं यथेदृक् ॥ १७ ॥

लग्नेश्वरेण सहिते यदि(ऽक्षिणि) लग्ननाथे
दुस्स्थेऽक्षिनाशनमथास्फुजिदिन्दुयुक्ते ।

**निशान्धयोगः तद्भङ्गश्च**

नेत्रेश्वरे रवियुते यदि नैशिकोऽन्धः
स्वोच्चे ग्र(गृ)हे शुभयुते न भवेत्स चान्धः ॥ १८ ॥

---

१. " तत्र स्थितौ चन्द्ररवी तदान्धो " इति पाठः साधुः ।

### जात्यन्धयोगः

शन्यारलग्नपतिभिः सहितेऽक्षिनाथे
जात्यन्धको भवति रन्ध्रत्रणान्वितो(ते)ऽपि ।

### काणयोगः

रिष्फे धरासुतयुते नयनं हि वामं
नाशं तदा व्रजति सूर्यसुतेन तस्य(चान्यत्) ॥ १९ ॥

### निमीलिताक्षयोगः

निमीलिताक्षस्तु धनेषु(स)पापे
तदीश्वरे शोभनदृष्टियुक्ते
लग्नाधिपे पापखगेन युक्ते
बलाधिके कारकखेचरेन्द्रे ॥ २० ॥
चैन्द्रार्कयुक्तेऽक्षियुते विलग्ने
शन्यारदृष्टेऽक्षिविनाशमाहुः

### बुद्बुदनेत्रयोगतद्भङ्गौ

शुभाशुभैर्बुद्बुदलोचनः स्यात्
शुभैर्न दोषः सहितेक्षणाभ्याम् ॥ २१ ॥

### नेत्ररोगयोगाः

नेत्रे यदा पापबहुत्वयोगे
यमेन दृष्टे स तु रोगनेत्रः ।
शन्यारयोगे फण(णि)नाथदृष्टे
नेत्रेश्वरे तत्र तु रोगनेत्रः ॥ २२ ॥
नेत्रेश्वरस्थांशपतौ सपापे
पापग्रहक्षेत्रगते तथैव ।
पापग्रहैर्युक्तनिरीक्षिते च
नेत्रस्य रोगं मुनयो वदन्ति ॥ २३ ॥

---

१. अत्र " चन्द्रार्कयुक्ते भृगुपे विलग्ने " इति वराहमिहिरसंमतः पाठः ।

शन्यारसहिते नेत्रे स्थाने पापनिरीक्षिते ।
कारके बलहीने तु नेत्ररोगं वदेद्बुधः ॥ २४ ॥

### नेत्ररोगयोगभङ्गाः

गुरुसौम्यात्मसंयोगाद्भावकारकयोरपि ।
भावे शन्यादियोगेन नेत्ररोगस्तथा म हि ॥ २५ ॥

कुजशुक्रौ यदैकस्थौ नेत्रस्थाने गतेऽपि च ।[1]
........................................ ॥ २६ ॥

### अक्षिसमुत्पाटनयोगः

अक्ष्णोः समुत्पाटनमाहुरार्या
नीचांशगौ पापयुतौ तथैव ।
[2] .... .... ....
.... .... .... ॥ २७ ॥

### चक्षुर्नाशयोगाः

पात्र(प)त्रययुतः सौम्यः शत्रुमित्रव्यवस्थितः ।
शुभग्रहा न पश्यन्ति चक्षुर्नाशोऽभिजायते ॥ २८ ॥

पापत्रययुतः सोमः शुक्रगेहे व्यवस्थितः ।
शुभग्रहा न पश्यन्ति चक्षुर्नाशोऽभिजायते ॥ २९ ॥

### द्वितीयभावोक्तफलस्य द्वादशभावे अतिदेशः

एतत्सर्वं चिन्तयेद्वित्तभावे
रिप्फे वा वाम्मं योजनीयं यथोक्तम् ।

---

१. अत्र ग्रन्थपातो दृश्यते । तत्र " नेत्रस्थानगतावपि । नीचारिभांशसंयुक्तौ नेत्ररोगप्रदौ ध्रुवम् " इति पठनीयम् ।

२. अत्र ग्रन्थपातो दृश्यते । तत्र " व्ययस्वगौ षष्ठमृतिस्थितौ वा पापेक्षितौ चन्द्ररवी यदा स्तः " इति पठनीयम् ।

एवं भ्राता मातृपितृस्वदारं(रान्)
पुत्रं शत्रुं योजयेद्बुद्धिवृद्धैः(द्धः) ॥ ३० ॥

इति अक्षिचिन्ता

## ॥ दीर्घह्रस्वदन्तयोगाः ॥

आदित्यराहुगुरुणा द्वि(भिर्द्वि)तीयस्थानयोगतः ।
दीर्घदन्तो भवेत्तस्य बुधयोगेन ह्रस्वजः ॥ ३१ ॥

### दन्तरोगदन्तपतनयोगाः

वाक्स्थानपे षष्ठगतेऽथ राहुः(राहौ)
राहुस्थितर्क्षाधिपसंयुते च ।
दन्तस्य रोगं पतनं च तेषां
भुक्तौ तयोर्वा प्रवदन्ति तज्ज्ञाः ॥ ३२ ॥

वाक्स्थानाधिपतौ राहौ[1] युक्ततत्क्षेत्रगे यदि ।
षष्ठे च दन्तपतनं तथैव बुधयोगतः ॥ ३३ ॥

### भयप्रमादयोगाः

वाक्स्थानपेनापि युतोऽर्कपुत्रः
पापैर्युतो वा च भयप्रमादः(दौ) ।
सूर्यस्य(श्च) कोपाद्भवति प्रमादो
राज्ञः कुजाक्षणस्तु(क्ष्णा तु) भयप्रमादः(दौ) ॥ ३४ ॥

### तालुरोगयोगाः

वाक्स्थानपेनापि युतेन्द्र(न्दु)पुत्रे
सराहुकेतावरिभावयुक्ते ।
राहुस्थितर्क्षाधिपसंयुते वा
भुक्तौ तदा तालुभवश्च रोगः ॥ ३५ ॥

---

१. राहुयुक्ते इति पाठः साधुः ।

## ॥ अथ भोजनचिन्ता ॥

### सुखभोजनयोगाः

भुक्तिस्थाने शुभयुते तदीशे शुभसंयुते ।
शुभग्रहेण संदृष्टे सुखभुक्स नरो भवेत् ॥ ३६ ॥

भुक्तिसौख्ययुतः श्रीमान् भुक्तेशे बलसंयुते ।
गुरुशुक्रयुते दृष्टे केन्द्रकोणसमन्विते ॥ ३७ ॥

### अल्पभोजनसौख्ययोगाः

अल्पासि(श्री) रुचिकामः स्याद्भुक्तिनाथे शुभग्रहे ।
स्वर्चे(र्क्षे) वा शुभसन्दृष्टे केन्द्रकोणगतेऽपि च ॥ ३८ ॥

वित्तेश्वरे तुङ्गत्रिकोणकेन्द्रे
मित्रालये भोजनमल्पसौख्यम् ।

### बहुभोजनयोगाः

क्रूरालये रिपुगृहे त्रिषडायनीचे
ध्माङ्क्षे(ध्वान्ते)ऽक्षिते यदि युते बहुभोजनं च ॥ ३९ ॥

### शीघ्रभोजनयोगौ

तदीशे शुभसंयुक्ते शीघ्रभुग्बलसंयुते ।
द्वितीये शुभराशौ वा शुभखेचरसंयुते ॥ ४० ॥

### विचित्रभोजनयोगाः

विचित्रभोजनकरो विक्रमेशे बलान्विते ।
गुरुणा वीक्षिते वापि राजयोग्यो नरो भवेत् ॥ ४१ ॥

### चिरभोजनयोगाः भोजनदूषकयोगाश्च

तदीशे ब(ख)लराशौ वा भुक्तौ वा तादृशे गृहे(ग्रहे) ।
तादृशे(तदीशे) पापसंबन्धे चिरभोक्ता च दूषकः ॥ ४२ ॥

**गरिष्ठभोजनयोगः**

धनेशो व्ययभावस्थो धने पापसमन्विते ।
चिरभोक्ता भवेज्जातो गरिष्ठभोजनप्रियः ॥ ४३ ॥

**भोजनदातृयोगः**

पञ्चमे बलसंयुक्ते मित्रग्रहसमन्विते ।
शुभग्रहेण संयुक्ते केन्द्रे भोजयिता भवेत् ॥ ४४ ॥

**दुर्भोजनप्रीतियोगाः**

पैपर्क्षे पापसंयुक्ते पापराशिगतो(ते)ऽपि वा ।
निर्धनो नेत्ररोगी च सदा दुर्भोजनप्रियः ॥ ४५ ॥

**परान्नभोजनयोगाः भोजननिन्दनयोगाश्च**

परान्नभुक्तदीशे तु नीचे तत्त्रिशसंयुते ।
नीचखेचरसन्दृष्टे तद्दूषणपरो भवेत् ॥ ४६ ॥

**श्राद्धभोजनयोगाः**

भुक्तिस्थानाधिपे मन्दे तदीशे मन्दसंयुते ।
नीचेऽर्कसूनुना दृष्टे श्राद्धभुक्स नरो भवेत् ॥ ४७ ॥

**भिक्षान्नभोजनयोगाः**

कर्माधिपेन सहिते विक्रमेशेऽपि दुर्बले ।
नीचराशिविमूढस्थे योगो भिक्षान्नकप्रदः ॥ ४८ ॥

वित्तलाभाधिपौ यस्य पापखेचरसंयुते(तौ) ।
जन्मपभृति दारिद्रयं भिया(क्षा)न्नं प्राप्यते नरैः ॥ ४९ ॥

**उष्णशीतलान्नभोजनयोगौ**

द्वितीयस्थानसंबन्धौ(न्धो) भौमभास्करयोर्यदि ।
भो(यो)गे च भोजनं चोष्णं शुक्रचन्द्रौ च शीतलम् ॥ ५० ॥

---

१. षष्ठभावे इत्यर्थः ।

## मद्यपानयोगाः

धनलाभाधिपो(पौ) यस्य नीचे वापि पुरोऽपि वा (रिपावपि) ।
राहुकेतुसमायोगे मद्यपायी नरो भवेत् ॥ ५१ ॥

## सुवर्णरजतपात्रभोजनयोगाः

भुक्तीश्वरे तत्स्व(त्वेच्छ)निशाकराभ्यां
केन्द्रे युते राजतमन्नपात्रम् ।
सै(सु)चन्द्रशुक्रामरनाथपूज्या
केन्द्रे स्थिताः स्वर्णमयं हि पात्रम् ॥ ५२ ॥

शुक्रे बलाढ्ये यदि वा शश(शा)ङ्के
सौम्येऽक्षिते शोभनखेटयुक्ते ।
स्वोच्चे स्थिते स्वोच्चस्वमित्रगेहे
सुपात्रभोक्ता बहुद्रव्यनाथः ॥ ५३ ॥

धनेश्वरे सौम्ययुते च तुङ्गे
केन्द्रे स्थिते राजतपात्रमाहुः ।
तद्राशिनाथामरपूज्यशुक्रे(क्रैः)
केन्द्रे च संस्थे च(स्थैश्च) सुवर्णपात्रम् ॥ ५४ ॥

## विचित्रपात्रभोजनयोगाः

विचित्रपात्रं प्रवदन्ति सन्तं(तो)
भुक्तीश्वरे केन्द्रगते बलाढ्ये ।
शुक्रामरेज्येन्दुसुता बलाढ्ये(ढ्या)
तै(स्तै)रेव युक्तो(क्ते)ऽत्र विशेषतश्च ॥ ५५ ॥

## लोहपात्रभोजनयोगः

लग्नेश्वरेण सहितौ शनिभुक्तिनाथौ
षष्ठस्थितौ यदि तदा प्रवदन्ति लो(लौ)हम् ।

---

१. अच्छः शुक्रः ।
२. सुचन्द्रः पूर्णचन्द्रः ।

कांस्यपात्रभोजनयोगः

कांस्यं वदन्ति किल भुक्तिपतौ बलाढ्ये
शुक्रेऽक्षिते च सहिते यदि सौम्यदृष्टे ॥ ५६ ॥

ताम्रपात्रभोजनयोगः

वित्तेशभानु(नू) त्रिकभावसंस्थे(स्थौ)
भौमेन दृष्टे(ष्टौ) यदि ताम्रपात्रम् ।

मृण्मयपात्रभोजनयोगः

लग्नेश्वरेण सहितो यदि भुक्तिनाथो
ध्माङ्क्षे(न्ते)ऽक्षितो मृन्म(ण्म)यमिश्र(मन्न)पात्रम् ॥ ५७ ॥

इति भोजनचिन्ता

॥ अथ वचनलक्षणम् ॥

वाग्मितायोगाः

वाक्स्थानपे सौम्ययुते त्रिकोणे
केन्द्रे स्थिते तुङ्गसमन्विते वा ।
शुभेऽक्षिते पुंग्रहसौम्ययुक्ते
वाग्मी भवेद्युक्तिसमन्वितो(ते)ऽसौ ॥ ५८ ॥

वाक्स्थाने शुभसंयुक्ते गुरुशुक्रनिरीक्षिते ।
तथाविधे वा लग्नेशे वाक्चातुर्यं विनिर्दिशेत् ॥ ५९ ॥

सत्यभाषणयोगाः

तृतीयाधिपतौ स्वोच्चे शुभमित्रसमन्विते ।
लाभ(भे) त्रिकोणे केन्द्रे वा सत्यवाक्स नरो भवेत् ॥ ६० ॥

मिथ्याभाषणयोगः

तृतीयाधिपतौ नीचे पापग्रहयुतेऽक्षिते ।
षष्ठाष्टमव्ययस्थो(स्थे)ऽपि मिथ्यावाक्स नरो भवेत् ॥ ६१ ॥

मार्जाराक्षं विजानीयाद्दारिद्र्यस्यार्थनाशकृत् ।[1]

द्रुतभाषणयोगः

गुरुभार्गवयोरैक्यं(क्ये) बुधो द्रावी च वाक्यवान् ॥ ६२ ॥

मूकत्वयोगाः

वागीशो वा [2]गृहाधीशः युक्तत्रितयसंस्थितः ।
कुर्वन्त्ये(करोत्ये)षां तु मूकत्वमूह्यमेवं मनीषिभिः ॥ ६३ ॥

इति वचनलक्षणम्

## ॥ अथ विद्यालक्षणम् ॥

गणितज्ञानयोगाः

वाक्स्थानपे बुधे स्वोच्चे लग्ने देवेन्द्रपूजिते ।
शनावष्टमसंयुक्त गणितज्ञो भवेन्नरः ॥ ६४ ॥

गणितज्ञो भवेज्जातो वाक्स्थाने भूमिनन्दने ।
ससोमे बुधसन्दृष्टे केन्द्रे वा सोमनन्दने ॥ ६५ ॥

तर्कशास्त्रज्ञानयोगाः

गुरौ वा यदि वा शुक्रे रविभौमनिरीक्षिते ।
मूलत्रिकोणतुङ्गस्थौ(स्थे) तर्कशास्त्रविशारदः ॥ ६६ ॥

वेदान्तज्ञानयोगाः

केन्द्रत्रिकोणगे जीवे शुक्रेन्दुबुधवीक्षिते ।
अथवा तैः समायुक्ते वेदान्तज्ञो भवेन्नरः ॥ ६७ ॥

---

१. अत्र "मार्जाराक्षं विजानीयाद्दरिद्रं चार्थनाशकं" इति पाठः साधुः । इदमपि पूर्वश्लोकोक्तयोगफलम् ।

२. अत्र गृहाधीशयुक्तत्रितयसंयुतः इति पाठः साधुः ।

**व्याकरणज्ञानयोगाः**

संपूर्णबलसंयुक्ते गुरौ वा भावनायके ।
तदीशे भृगुसंयुक्ते शाब्दिकेयो भवेन्नरः ॥ ६८ ॥

**काव्यकलाज्ञानयोगाः**

जीवे द्वितीये सुखगे सुखेशे
शुक्रेऽक्षिते पापदृशा विहीने ।
पूर्णेन्दुदृष्टे यदि माननाथे
भाग्यस्थिते काव्यकलाप्रवीणः ॥ ६९ ॥

**सकलविद्याज्ञानयोगाः**

सुखेशे केन्द्रभावस्थे(गे भाग्ये) चन्द्रे केन्द्रगते भृगौ ।
शशिजे स्वोच्चराशिस्थे विद्यावान् जायते नरः ॥ ७० ॥

**शिल्पविद्याज्ञानयोगाः**

बुधद्रेक्काणगे सौम्ये तद्राशौ जन्मलग्नतः ।
कर्मेशे शनिसंदृष्टे शिल्पविद्याधिपो भवेत् ॥ ७१ ॥

**यात्राविद्याज्ञानयोगाः**

विद्याधिपे(पो) जीवबुधावपि द्वा-
वरित्रयस्थौ कुरुतोऽपि तौ चेत् ।
केन्द्रत्रिकोणस्वगृहोच्चसंस्थौ
प्रयच्छतो वा गमनस्य विद्याम् ॥ ७२ ॥

**इति विद्यालक्षणम्**

## ॥ अथ धनप्राप्तियोगाः ॥

**धनचिन्तोपायः**

अतः परं धनेशाच्च ततो(स्थात्) बहुधनं वदेत् ।
धनद्रष्टेव(ष्टा च) वक्तव्यं धनं पूर्वं धने(नं) स्थितम् ॥ ७३ ॥

### धनप्राप्तिकालः

धनद्रष्टुर्दि(र्ध)नस्थस्य धनेशस्य दशासु च ।
धनकारकसंयोगे धनं वहु समश्नुते ॥ ७४ ॥

### बहुधनप्राप्तियोगाः

धनस्थानाधिपो यस्य धनात्केन्द्रगतो यदि ।
लाभे कोणे धनाढ्यश्च भाग्यभोगसमन्वितः ॥ ७५ ॥

धनेशो लाभराशिस्थे लाभेशो धनराशिगे ।
तावुभौ केन्द्रराशिस्थौ धनदेन समो भवेत् ॥ ७६ ॥

नेत्रेशत(स्त)नुलाभेशयुक्तः क्रूरविवर्जितः ।
केन्द्रे शे(स्वां)शे तु संयुक्तो धनेश्वरमुदीरयेत् ॥ ७७ ॥

धनाधिपो धनस्थश्चेल्लग्नेशो लग्नसंस्थिते ।
लाभाधिपे लाभयुक्ते धनं बहु समन्वितम् ॥ ७८ ॥

लाभाधिपधनाधीशौ लग्नराशावुपागतौ ।
परस्परं मित्रभूतौ धनं बहु समश्नुते ॥ ७९ ॥

### कोटीश्वरयोगाः

लग्नेशे धनभावस्थे केन्द्रस्थे साधुखेचरे ।
सुखेश(शे) त्रिकभावेषु(वस्थे) कोटिवित्तं समश्नुते ॥ ८० ॥

### निधिप्राप्तियोगः

धनस्थाने शुभैर्युक्ते शुभग्रहनिरीक्षिते ।
निक्षेपधनसंप्राप्तिरिति ज्यौतिषनिर्णयः ॥ ८१ ॥

### स्ववीर्यधनप्राप्तियोगः

वित्तेश्वरः पश्यति लग्ननाथं
युँतः स्ववीर्याद्धनमेति जातः ।

---

१. लग्ननाथेनेति शेषः ।

### भ्रातृधनप्राप्तियोगः

तृतीयभावाधिपकारकाभ्यां
दृष्टे युते तादृशभ्रातृवित्तम् ॥ ८२ ॥

### पितृमातृधनप्राप्तियोगौ

धर्मस्थानाधिपार्काभ्यां युतो(तं) दृष्टो(ष्टं) धनं यदि ।
पितृमूलाद्धनं सो(नेशे)ऽपि चन्द्रे मातृधनागमम् ॥ ८३ ॥

### राजधनप्राप्तियोगः

कर्मस्थानाधिपे नीचे चन्द्रे शुक्रेण संयुते ।
राजमूलाद्धनप्राप्तिः संभवेन्नात्र संशयः ॥ ८४ ॥

### नीचजातिधनप्राप्तियोगः

कर्मस्थाने सिते मन्दे अथवा राहुसंयुते ।
शूद्रादिनीचजातीनां धनसंप्राप्तिरेव वा ॥ ८५ ॥

### म्लेच्छमूलधनयोगः

धनपुत्राधिपौ युक्तौ शत्रुक्षेत्रसमन्वितौ ।
राहुसंबन्धदृष्टौऽपि(ष्टिभ्यां) म्लेच्छमूलाद्धनागमः ॥ ८६ ॥

### तस्करमूलधनागमयोगाः

कोणे विलग्ने फणिरर्थनाथे
षष्ठोऽथवा द्वादशराशिनीचे ।
चन्द्रेशलाभाधिपशत्रुनीचे
धनार्जनं तस्करतश्च पुंसाम् ॥ ८७ ॥

---

१. अयं श्लोकोऽतीवाशुद्धः । अतः स एवं पठनीयः
"कोणे विलग्ने फणिनि स्वनाथे षष्ठेऽथवा द्वादशगेऽथ नीचे ।
चन्द्रेऽरिनीचोपगते भवेशे धनार्जनं तस्करतश्च पुंसाम् ॥" इति

राजादिमूलधनयोगाः

सूर्याङ्गारखुधान्वितो नृपधनध्माङ्क्षाधिपः स्याद्धनं[1]
कर्मेशे सुरराशि(ज)मन्त्रिसहिते भूपालमूलाद्धनम् ।
शुक्रेणापि कलत्रपेण सहिते स्त्रीसंनिधानाद्धनं
शूद्रद्रव्यमुपैति मन्दसहिते राह्वन्विते क्षुद्रतः ॥ ८८ ॥

इति धनप्राप्तियोगाः

## ॥ अथ निर्धनयोगाः ॥

धनस्थानाधिपे षष्ठे व्यये चाष्टमसंयुते ।
निर्धनो भाग्यहीनोऽसौ कृपणश्च न संशयः ॥ ८९ ॥

धने क्रूराहिसंयुक्ते तदीशे पापसंयुते ।
तथैव लाभराशीशे धनहीनो भवेन्नरः ॥ ९० ॥

वित्ताधिपे पापयुते षष्ठाष्टमव्ययस्थिते ।
अल्पविद्या कलत्रं च धनाल्पमिति केवलम् ॥ ९१ ॥

इति निर्धनयोगाः

## ॥ अथ धनक्षययोगाः ॥

राजदण्डकृतधनक्षययोगाः

धनेशे नाशराशिस्थे सपापे नीचराशिगे ।
राजचोरक(खेचर)सन्दृष्टे राजदण्डाद्धनक्षयः ॥ ९२ ॥

व्ययेशे धनभावस्थे रिप्फस्थे धननायके ।
दुस्स्थे धनेशे नीचे वा राजदण्डाद्धनक्षयः ॥ ९३ ॥

षष्ठाष्टमव्ययस्थेषु(स्थौ च) धनलाभाधिपौ यदि ।
लाभे कुजे धने राहौ राजदण्डाद्धनक्षयः ॥ ९४ ॥

---

१. अत्र प्रथमः पादो दुर्बोधः । तत्रैवं पठनीयं "सूर्याङ्गारखुधान्विते नृपधनं ध्वान्ताधिपेनापणात्" इति । ध्वान्ताधिपश्चन्द्रः ।

धनव्ययेशौ व्ययवित्तसंस्थौ
लग्नेश्वरेणापि निरीक्षितौ चेत् ।
लाभाधिपे नाशगते सपापे
राज्ञः प्रलोभा(कोपा)द्धननाशमाहुः ॥ ९५ ॥

लग्नाधिपे हीनबले सपापे
रिष्फे धनेशे दिननाथयुक्ते ।
नीचस्थिते चाशुभदृष्टियुक्ते
जातस्य वित्तं हरति क्षितीशः ॥ ९६ ॥

षष्ठाष्टमत्र्यधि(व्यय)पतिः कुटुम्बस्थो यदा तदा ।
नीचग्रहेण सन्दृष्टो राजकोपाद्धनान्तभाक् ॥ ९७ ॥

भुक्तिकृतधनक्षययोगः

व्ययेशे भुक्तिराशिस्थे भुक्तिस्थानपसंयुते ।
भुक्तिकारकसंबन्धे द्रव्याणां भुक्तितः क्षयः ॥ ९८ ॥

इति धनक्षययोगाः

॥ ऋणबाधायोगाः ॥

दिनेक(श)करलुप्तास्तधनेशो(शौ) नीचराशिगः(गौ) ।
पापान्विते धने रन्ध्रे ऋणग्रस्तो भवेन्नरः ॥ ९९ ॥

अन्नदानयोगाः

अन्नप्रदो द्वितीयेशे गुरुसौम्ययुतेऽक्षिते ।
सबले केन्द्रकोणे वा त्वन्नदाता भवेन्नरः ॥ १०० ॥

जनरक्षकयोगाः

गुरौ कुटुम्बे स्वपतौ यदि स्यात्
भृगौ बुधे तादृशभावनाथे ।
स्वक्षेत्रभे(गे) मित्रगृहेऽथवा स्यात्
परोपकारी जनरक्षकः स्यात् ॥ १०१ ॥

## ॥ अथ कुटुम्बचिन्ता ॥

### कुटुम्बवृद्धियोगाः

कुटुम्बाधिपतौ लाभे ह्यष्टमाधिपसंयुते ।
कुटुम्बवृद्धिः साक्षः(सम्यक्) स्यादिति केरलनिश्चयः ॥ १०२ ॥

कुटुम्बकारके केन्द्रे त्रिकोणेशे(ऽन्ये) गता ग्रहाः ।
सकुटुम्बकलत्रः स्यात्

### कलत्रसङ्ख्या

कुटुम्बं वा कलत्रकम् ॥ १०३ ॥

पश्यन्ति यद्यद(तदव)स्थाना यावन्तस्तु प्रमाणतः ।
कलत्रं निर्दिशेत्प्राज्ञोऽथवा तेषां बलाद्वदेत् ॥ १०४ ॥

### सहस्ररक्षणयोगाः

कुटुम्बनाथे परमोच्चभागे
देवेन्द्रपूज्येन युतेऽक्षिते वा ।
तथाविधे तद्भवनेऽभिजातः
सहस्ररक्षो भवति प्रतापः(पी) ॥ १०५ ॥

### अशेषरक्षणयोगाः

स्वोच्चस्थिते शोभनखेचरेन्द्रे
कुटुम्बराशौ शुभवीक्षिते वा ।
अशेषसंरक्षक(ण)जातपुण्यो
लग्नेश्वरे वीर्ययुते स्वतुङ्गे ॥ १०६ ॥

### चक्रवर्तियोगः

स्वोच्चत्रिकोणोपचये कुटुम्ब-
राशीश्वरे लग्नपतौ बलाढ्ये ।
कुटुम्बराशी(नाथ)स्थितराशिनाथे
स्वोच्चे तदा सर्वजनावनीशः ॥ १०७ ॥

कुटुम्बसंरक्षकवाग्योगः

कुटुम्बराशेरधिपस्य(श्च) सौम्यः
केन्द्रस्थिते(तः) स्वोच्चसुहृद्गृहे वा ।
सौम्यत्रियुक्तो यदि जातपुण्यः
कुटुम्बसंरक्षकवाग्विभूतिः ॥ १०८ ॥

इति कुटुम्बचिन्ता

॥ एकपत्नीयोगाः ॥

धनाधिपे स्वोच्चत्रिकोणकेन्द्रे
स्वोच्चग्रहस्थेषु कुटुम्बमेकम् ।

कलत्रसौख्ययोगाः

तदीशभाग्याधिपयुक्तखेटं(केन्द्रे)
गृहस्य वृद्धिं च कलत्रसौख्यम् ॥ १०९ ॥

कलत्रनाशयोगाः

कलत्रस्थानगे मन्दे तस्मात्स[प्त]मगे भृगौ ।
तदंशे षष्ठराशिस्थे दारनाशं विनिर्दिशेत् ॥ ११० ॥

कलत्रनाथे रिपुनीचसंस्थे
पूर्वे(मूढे)ऽथवा पापनिरीक्षिते वा ।
कलत्रभे पापयुते च दृष्टे
कलत्रहानिं प्रवदन्ति सन्तः ॥ १११ ॥

॥ इति श्रीदैवज्ञाभरणे धनभावविवेचनं नाम दशमः प्रकाशः ॥

आदितः श्लोकसंख्या ५८८

---

१. " स्वोच्चे ग्रहेऽर्थे तु " इति पाठः साधुः ।

॥ श्रीः ॥

# अथैकादशः प्रकाशः

## ॥ अथ तृतीयभावविवेचनम् ॥

अतः परं भ्रातृभावानुरूपं
फलं पुराणैर्मुनिभिर्यदुक्तम् ।
तत्सारमाशु क्रमबोधनार्थं
वक्ष्यामि खेटान्तरदृष्टियोगैः ॥ १ ॥

### ॥ अथ कर्णचिन्ता ॥

#### दीर्घकर्णयोगः

कर्णेश्वरे शुभयुते शुभक्षेत्रे जलेऽपि च ।
जलग्रहेण संदृष्टे कर्णदीर्घं नरं वदेत् ॥ २ ॥
स्वोच्चमित्रगृहस्थो(स्थे) वा न तु नाशस्थितो(ते) यदि ।

#### कर्णभूषणयोगः

कर्णाधिपे त्वनर्घं तु कर्णयोर्भूषणं वदेत् ॥ ३ ॥

#### कार्श्यबाधिर्ययोगौ

शौर्याधिपे पापखगेन युक्ते
शुष्कग्रहेणापि सदैव युक्ते ।
अन्योन्यवैराधिपराशिगश्चेत्
कृशं(शः) च(स) वाच्यं(च्यो) बधिरः सुधीभिः ॥ ४ ॥

#### पुनरपि कर्णभूषणयोगाः

तृतीये बुधसंयुक्ते सौम्यखेचरवीक्षिते ।
तदीशे शुभसंयुक्ते कर्णयोर्भूषणं वदेत् ॥ ५ ॥

कर्णेशे तुङ्गराशिस्थे केन्द्रे च शुभवीक्षिते ।
बुधजीवेन्दुसन्दृष्टे कर्णयोर्भूषणं वदेत् ॥ ६ ॥
कर्णस्थानाधिपे स्वोच्चे शुभग्रहनिरीक्षिते ।
लग्नाधिपेन सन्दृष्टे कर्णभूषणमादिशेत् ॥ ७ ॥

**मुक्तादिनिर्मितकर्णाभरणयोगाः**

चलराशिगते कर्णस्थानेशे शुभसंयुते ।
धातुग्रहे यदि भवेन्मुक्ताभरणमादिशेत् ॥ ८ ॥
भानोस्तु संबन्धयुते तृतीये
सरक्तिमानीलमयं हि मन्दे ।
चन्द्रे बहु ह्याभरणं तु सौम्ये
श्यामं भवेत्तत्क्षितिसूनुराशौ ॥ ९ ॥
विचित्रमाल्या(मण्या)भरणं तथैव
पापेऽक्षिते तल्लयमाहुरार्याः ।
शुक्रे तृतीये यदि मौक्तिकं तु
जीवे तु मण्याभरणं वदन्ति ॥ १० ॥

**पुराणश्रवणादियोगः**

कर्णे तु शुभखेटानां गृहे तु शुभवीक्षिते ।
श्रवणं तत्कथानां च पुराणश्रवणादिकम् ॥ ११ ॥
शुभग्रहाणां भवने च तस्मिन्
तृतीयराशौ श्रवणं कथानाम् ।
पुण्यादिकानां यदि पापराशौ
क्रूरश्च तत्कर्णकठोरमाहुः ॥ १२ ॥

**पुनरपि बाधिर्ययोगः**

तृतीया(त्रयश्च) यत्र कोणस्थाः क्रूरसौम्यनिरीक्षिताः ।
तद्वलग्नग्रहदोषेण बधिरश्च विरोधकः ॥ १३ ॥

**इति कर्णचिन्ता**

## ॥ अथ कण्ठचिन्ता ॥

### दिव्यस्वरयोगाः

शौर्याधिपे भृगुयुते केन्द्रकोणस्वगेहगे ।
मित्रे वा गुरुसन्दृष्टे दिव्यस्वरयुतो भवेत् ॥ १४ ॥

शौर्याधिपे केन्द्रत्रिकोणसंस्थे
कर्माधिपे संयुतवीक्षिते वा ।
दिव्यस्वरः स्याद्यदि जन्मकाले
शुक्रेऽपि तुङ्गे शुभगेहसंस्थे ॥ १५ ॥

### सत्यभाषणयोगः

सहजस्थितखेचरो यदा
कुजयुक्तो यदि सत्यवान् गुणी ।

### सुखगानयोगाः

सहितो भृगुनन्दनेन चेत्
सुखवाग्गानसुखान्वितो भवेत् ॥ १६ ॥

तृतीये शुभसंयुक्ते नाथेऽपि सौम्यवीक्षिते ।
कारके बलसंयुक्ते स्वरेण रञ्जयेन्नरम् ॥ १७ ॥

### विषप्रयोगविषभक्षणयोगाः गलरोगयोगाश्च

नीचे तृतीयेऽरिगृहे च पापे
पापेऽक्षिते तद्गलरोगमाहुः ।
विषप्रयोगो विषभक्षणो(णं) वा
तेषामभावे गलरोगमाहुः ॥ १८ ॥

### सर्पभययोगौ गलरोगयोगश्च

शौर्याधिपे राहुयुते च राशि-
नाथान्विते राहुयु(यु)ते विलग्ने ।

---

१. शौर्याधिपेनेति शेषः ।

सर्पाद्वयं विक्रमराशिनाथे
बुधेन युक्ते गलरोगवन्तम्    ॥ १९ ॥

इति कण्ठचिन्ता

## ॥ धैर्ययोगः ॥

भ्रातृस्थानाधिपे यस्य स्वोच्चे वा शुभसंयुते ।
शुभग्रहेण सन्दृष्टे सदा धैर्यमवाप्नुयात्    ॥ २० ॥

## ॥ अथ युद्धचिन्ता ॥

### दृढयुद्धयोगः

शौर्याधिपे विक्रमस्थे रविराहुयुतेऽक्षिते ।
भौमेनापि युते दृष्टे दृष्टयुद्धविशारदः    ॥ २१ ॥

### युद्धात् पलायनयोगः

विक्रमाधिपतौ स्वोच्चे नाशस्थे पापसंयुते ।
चरखेचरसंयुक्ते युद्धपूर्वाद्द्रुतो भवेत्    ॥ २२ ॥

### युद्धमरणयोगः

पापग्रहाणां भवने विक्रमे पापसंयुते ।
तथाविधे तदीशे तु युद्धपूर्वं हतो भवेत्    ॥ २३ ॥

### युद्धे विजययोगः

सहजस्थितकारकाधिपः(पाः)
सहजद्रष्टृखगो बलान्वितः(ताः) ।
स्वगृहोच्चसुहृद्गृहस्थितः(ताः)
यदि युद्धे विजयस्तु विक्रमः( मात् )    ॥ २४ ॥

### बलहीनयोगाः

तृतीयेशस्तृतीयस्थतृतीयद्रष्टृकारकाः ।
बलहीना भवेयुश्चेद्बलहीनो भवेन्नरः    ॥ २५ ॥

युद्धजाड्ययोगः

शौर्याधिपे शनियुते तत्क्षेत्रे पापभे स्थिते(खेचरे) ।
पापखेचरसन्दृष्टे युद्धजाड्यो भवेन्नरः ॥ २६ ॥

अन्तर्जाड्यबहिर्दार्ढ्ययोगः

विक्रमेशे फणियुते पापचन्द्रयुते यदि ।
वीक्षिते हृद्गते जाड्ये बहिर्दार्ढ्ये(र्ढ्यं) नृणां भवेत् ॥ २७ ॥

इति युद्धचिन्ता

॥ अथ भ्रातृचिन्ता ॥

भ्रातृवृद्धियोगः

भ्रातृस्थानाधिपो यस्य तस्य केन्द्रगतोऽपि वा ।
कोणे लाभे स्थितो वापि भ्रातृवृद्धिर्न संशयः ॥ २८ ॥

केन्द्र(न्द्रे) त्रिकोणे स्वोच्चे वा मित्रराशिसमन्विते ।
नाथे न(वा) कारके वापि भ्रातृलाभमुदीरयेत् ॥ २९ ॥

ज्येष्ठपुत्रयोगः

भ्रातृस्थानाधिपो(पे) लाभे पञ्चमाधिपसंयुते ।
भ्रातुश्च(ता च) प्रथमो ज्ञेय इति केरलनिश्चयः ॥ ३० ॥

पुनरपि भ्रातृवृद्धियोगाः

भ्रातृस्थानाधिपे केन्द्रे स्वोच्चमित्रत्रिकोणगे ।
शुभेऽक्षिते शुभैर्युक्ते भ्रातृवृद्धिमुदीरयेत् ॥ ३१ ॥

शुभवीक्षितमिश्रे(त्रे)ऽपि भ्रातृस्थाने शुभेऽक्षिते ।
महासौख्यकरं ब्रूयाद्भ्रातृवृद्धिमुदीरयेत् ॥ ३२ ॥

भ्रातृपे लग्नभावस्थे भ्रातृकारकसंयुते ।
भ्रातृवृद्धिकरं नृणां इदं(ति) केरलनिश्चयः ॥ ३३ ॥

भ्रातृपे कारके वापि शुभयोगे शुभेऽक्षिते ।
भावे च बलसंपूर्णे भ्रातृणां वर्धनं भवेत् ॥ ३४ ॥

## ॥ अथ भ्रातृसंख्याज्ञानम् ॥

भ्रातृस्थानाधिपे केन्द्रे कारकेऽपि त्रिकोणगे ।
जीवेन संयुते स्वोच्चे द्वादश भ्रातरः स्मृताः ॥ ३५ ॥
भ्रातृस्थानाधिपे दुस्स्थे कारके वा तथाविधे ।
पापेऽक्षिते पापयुक्ते स्वोच्चे वा सोदरद्वयम् ॥ ३६ ॥
भ्रातृस्थाने शशियुते भ्रातरः सप्तसंङ्ख्यकाः ।
तेषां द्विद्विप्रजानाशः शुक्रयुक्तेऽक्षिते न हि ॥ ३७ ॥

इति भ्रातृसंख्याज्ञानम्

## ॥ सोदरोत्पत्तियोगः ॥

अङ्गारकसमायुक्तौ भ्रातृमातृगृहाधिपौ ।
अपि मातृगृहस्थौ च सोदरोत्पत्तिरीरितः ॥ ३८ ॥

### कनिष्ठपुत्रयोगः

कारके राहुसंयुक्ते विक्रमेशस्तु नीचगः ।
पश्चात्सहोदराभावस्तप्तृत्वं(त्पूर्वं) सोदरत्रयम् ॥ ३९ ॥

### भगिनीजननयोगाः भ्रातृजननयोगाश्च

स्त्रीग्रहो भ्रातृभावेशः स्त्रीग्रहक्षेत्रगोऽपि वा ।
भगिन्यश्च तदा भ्राता पुंग्रहः पुंग्र(गृ)हे यदि ॥
मिश्रा [वि]मिश्रफलदा तथैव बलनिर्णयः ॥ ४० ॥
ईक्षिते भ्रातृसंस्थाने पुंसा पुत्रो न संशयः ।
स्त्रीग्रहे वी(हैर्वी)क्षिते य(त)स्मिन् स्त्रीणां जन[न]निश्चयः ॥ ४१ ॥
भ्रातृस्थाने भृगुयुते तदीशे चन्द्रसंयुते ।
कारके मन्दसंयुक्ते भगिन्यो नाग्रजो भवेत् ॥ ४२ ॥

### सापत्नसहजयोगाः

लग्नेश्वरे नीचगते बलाढ्ये
पापान्विते सोदरकारकाख्ये ।

तन्मातृकारग्रहसंयुतश्चेत्(ते चेत्)
सपत्निमातुः सहजान्वदन्ति ॥ ४३ ॥
लग्नेश्वरे भ्रातृपतौ बलाढ्ये
क्रूरान्विते भौमस(भूमिज)चन्द्रयुक्ते ।
सपत्निमातुस्तनुजोद्भवस्य
लाभाधिपेऽग्रेजनित(प्रभव)स्य लाभः ॥ ४४ ॥

**सोदरनाशयोगः**

जननीसोदराधीशौ मातृभावसमन्वितौ ।
स्यातां चेत्तस्य जातस्य नश्यन्ति खलु सोदराः ॥ ४५ ॥

**अल्पसोदरयोगः**

राहुर्वा रविसूनुर्वा भ्रातृस्थानगतौ यदि ।
षष्ठाष्टमव्ययस्थश्चेत्तदीशो भ्रातृमन्दता ॥ ४६ ॥

**यावज्जीवं सोदरमैत्रीयोगः**

तृतीयाधिपतिर्देहनायकेन समन्वितः ।
परस्परं सोदराणां यावज्जीवं च मित्रता ॥ ४७ ॥
लग्नेशसोदरपतिः(तीं) सुहृदुच्चसंस्थौ
लग्नेऽपि वा सहजके यदि वर्तमानौ ।
स्यातां परस्परसुहृद्ददितो(तौ) यदा चे
द्वैरं विहाय सहजः(जाः) सह भुञ्जते हि ॥ ४८ ॥
लग्ननाथस्य भौमस्य(श्च) मित्रं चेन्मै(न्मि)त्रता भवेत् ।
भ्रातृशत्रुर्भवेच्छत्रुश्चेदेवं विनियुज्यते ॥ ४९ ॥

**यावज्जीवं सोदरवैरयोगः**

सहजलग्नपते(ती) रिपुतां गतौ
सहजसंस्थितसोदरकारकौ ।
अपि च नीचगतौ रिपुमेऽस्तगौ
भवति सन्ततसोदरवैरिता ॥ ५० ॥

भ्रातृभाग्ययोगः

भ्रातृस्थानाधिपे स्वोच्चे धर्मकर्माधिपेऽक्षिते ।
भ्रातृणां भाग्यसंपन्नं(त्तिं) वदेज्ज्योति[ष]स(वि)त्तमः ॥ ५१ ॥

भ्रातृनाशयोगाः

नाशस्थितौ सोदरनाथभौमौ
पापेऽक्षितौ सोदरनाशमाहुः ।
पापर्क्षगौ पापसमन्वितौ वा
भ्रातॄन्समुत्पाद्य विनाशयेत्तान्( ताम् ) ॥ ५२ ॥

भ्रातृस्थानाधिपः पापो दुस्स्थानस्थो यदा भवेत् ।
उत्तरे भ्रातृजननं नाशमायाति निश्चितम् ॥ ५३ ॥

पापग्रहे सोदरभावयुक्ते
स्वोच्चेऽथवा पापनिरीक्षिते वा ।
तदीश्वरे पापखगान्तरस्थे
सहोदराणां कथयन्ति नाशम् ॥ ५४ ॥

भ्रातृस्थानाधिपो(पे) यस्य नीचे वा पापसंयुते ।
पापग्रहेण सन्दृष्टे भ्रातृणां नाशनं वदेत् ॥ ५५ ॥

पापान्तरे पापनिरीक्षिते वा
पापान्विते पापगृहान्विते वा ।
तृतीयभावे शुभखेचरेन्द्रैः
निरीक्षिते सोदरनाशमाहुः ॥ ५६ ॥

पापान्तरे तदीशे तु कारके वा तथाविधे ।
तथैव तद्भाव(ल्लाभ)नाथे सोदराणां विनाशनम् ॥ ५७ ॥

॥ इति श्रीदैवज्ञाभरणे तृतीयभावविवेचनं नामैकादशः प्रकाशः ॥

आदितः श्लोकसंख्या ६४५

---

॥ श्रीः ॥

## ॥ अथ द्वादशः प्रकाशः ॥

### ॥ अथ चतुर्थभावविवेचनम् ॥

अथ पातालभावानां फलं पुंसां यथोऽचितम् ।
पराशरादिमुनिना(भिः) कथितं यत् प्रयत्नतः ॥ १ ॥

### ॥ अथ हृदयचिन्ता ॥

**निष्कापट्ययोगाः**

हृदये शुभसंयुक्ते स्वोच्चमित्रगृहान्विते(हेऽधिपे) ।
शुभग्रहाणां मध्यस्थे निष्कापटयं विनिर्दिशेत् ॥ २ ॥

**क्षणमात्रकापट्ययोगः**

भानुना क्षीणचन्द्रेण सहितो(तं) हृदयो(यं) यदा ।
कपटी क्षणमात्रं तु निष्कापटयं तदूर्ध्वतः ॥ ३ ॥

**पुनरपि शुद्धहृदययोगाः**

विशुद्धहृदयः शान्तो हृदयेशे बलान्विते ।
शुभग्रहाणां मध्यस्थे शुभखेचरसंयुते ॥ ४ ॥

लग्ने गुरौ दानवपूजितेन
 युक्ते[1] यस्य तस्य विशुद्धचित्तम् ।

**कापट्ययोगाः**

पापे सुखे तद्भवनाधिनाथे
 पापे यदा हृत्कपटी भवेच्च ॥ ५ ॥

---

१. युक्तेक्षिते इति पाठः साधुः ।

हृदये पापसंयुक्ते पापदृष्टे तदीश्वरे ।
पापान्तरे वा हृदये हृत्कापट्यं विनिर्दिशेत् ॥ ६ ॥

### निष्कापट्यवेषधारियोगौ

भानौ सुखे पापदृशा समेते
बहिर्विशुद्धश्च जनो विभाति ।
अन्तर्गतं तत्कपटं वदन्ति
पापे[1] बहुत्वे सुखराशियुक्ते ॥ ७ ॥

### पुनरपि कापट्ययोगौ

पापे कर्मेश्वरे सौख्ये कपटी पापवीक्षिते ।
सपापे रन्ध्रपे सौख्ये कपटी पापसंयुते ॥ ८ ॥

इति हृदयचिन्ता

## हृद्रोगयोगाः

हृदये गुरुसंयुक्ते कुजार्कदृष्टि[2]................ ।
हृहये व्रणरोगं च(गश्च) निश्चयं( यात् ) जायते नृणाम् ॥ ९ ॥
हृदये पापसंयुक्ते तदीशे पापसंयुते ।
पापग्रहाणां मध्यस्थे हृद्गतं रोगमादिशेत् ॥ १० ॥

### नारीस्तनलक्षणम्

चतुर्थेशे राहुयुते सा नारी लम्बतो[3] व्रजेत् ।
केतुयुक्ते स्तनौ स्वल्पौ बुधेन समता भवेत् ॥ ११ ॥
सगुरुशुक्रयुते हिबुकाधिपे
शुभराशौ यदि केन्द्रकोणगे ।

---

१. " पापैरनेकैः सुखराशियुक्तैः " इति पाठः साधुः ।

२. " कुजार्काभ्यां युतेऽक्षिते " इति पाठः पूरणीयः ।

३. " लम्बितस्तनी " इति पाठः साधुः ।

अथवा शुभराशिदृष्टियु[क्ते]
क(क)ठिनस्थूल्युतं(तमं) स्तनद्वयम् ॥ १२ ॥

तुङ्गोन्नतस्तनी सा स्यात्सु(स)बुधे वासरेश्वरे ।
गुरुव(वि)त्सहिते भानौ नारिकेलफलस्तनी ॥ १३ ॥

### सौख्ययोगाः

सुखे गुरौ शोभनखेचरे वा
सौम्यान्तरे तद्भवने ससौम्ये ।
जीवे बलाढ्ये यदि लग्ननाथः(थे)
सुखी भवेत्सर्वजनेषु मुख्यः ॥ १४ ॥

जीवे बलाढ्ये सुखराशिनाथ-
युक्ते तु सौम्ये च चतुष्टयस्थे ।
जीवेन दृष्टे यदि वा तदीशे
सौम्येऽक्षिते वा सुखभाङ्नरः स्यात् ॥ १५ ॥

### पुण्यभागितायोगाः

शुक्रेन्दुविद्देवसुपूजितानां ।
क्षेत्रे सुखे पूर्णबलान्वितानाम् ।
शुभान्विते शोभनदृष्टिपाते
जातो नरोऽयं भुवि पुण्यभाक्स्यात् ॥ १६ ॥

व्यये बुधे तदीशे वा स्वोच्चस्थे स तु पुण्यभाक् ।
चन्द्रे तृतीये तोयर्क्षे सौम्यदृष्टे च पुण्यभाक् ॥ १७ ॥

### पापभागितायोगाः

पैापे बहुत्वे सुखराशियुक्ते
तदीश्वरे चारिविमूढयोगात् ।

---

१. "पापैरनेकैः सुखराशियुक्तैस्तदीश्वरे वाऽरिगते विमूढे" इति पाठः साधुः ।

पापान्विते वा यमसूनुयुक्ते
जातं(तः) प्रभुत्वं(भूतं) समुपैति पापम् ॥ १८ ॥

मूढः पापरतो नित्यं कर्मेशे नीचसंयुते।
पापान्विते पापदृष्टे यदि सौम्यैर्न वीक्षितः(ते) ॥ १९ ॥

### जलमज्जनयोगाः

लग्नेश्वरे हीनबले सुखस्थे
नीचालि(रि)युक्ते यदि वा सपापे।
जलग्रहेणापि युते सुखेशे
जले[1] च हीने जलराशिमग्नः ॥ २० ॥

नीचान्विते सू(सौ)रियुते सुखस्थे
सपलि(ल)भे वा जलराशिसंस्थे।
तदीश्वरे दी(ही)नबले तदानीं
पतत्यसौ कूपतटाकेषु ॥ २१ ॥

### शिलाप्रहारयोगः

शिलाप्रहरणं तस्य रविभौमान्विते सुखे।
कर्माधिपेन संदृष्टे सरित्स्थानाधिपो(पे) भवेत् ॥ २२ ॥

## ॥ अथ मन्दिरचिन्ता ॥

### गृहलाभयोगाः

गृहेशे केन्द्रकोणस्थे यदि वा भृगुनन्दने।
भाग्याधिपेन सन्दृष्टे गृहलाभमुदीरयेत् ॥ २३ ॥

### अयत्नतो गृहलाभयोगाः

स्वोच्चे स्वमित्रे स्वगृहे त्रिकोणे
गृहाधिपे केन्द्रगते बलाढ्ये।

---

१. जले चतुर्थे, हीने दुर्बले।

सौम्येऽक्षिते सौम्ययुते तथैव-

मयत्नतो मन्दिरलाभमाहुः ॥ २४ ॥

लग्नेश्वरे लग्नगते सुखेशे

सुखस्थिते स्याद्यदि गेहलाभः ।

अयत्नतः स्याच्छुभदृष्टियोगः(ष्ट्युक्ते)

स्वोच्चे स्वमित्रे स्वगृहे बलाढ्ये ॥ २५ ॥

**हर्म्यादियुतगृहलाभयोगाः**

तृतीये सौम्यसंयुक्ते गेहेशे च बलान्विते ।

केन्द्रत्रिकोणनिलये हर्म्यप्राकारमन्दिरम् ॥ २६ ॥

बुधे सजीवे यदि वा सभौमे

प्राकारकृन्मण्टपगोपुरादीन् ।

**जीर्णोद्धारकयोगाः**

माने गृहे तद्गृहनाथयुक्ते

करोति जीर्णोद्धरणादिकं तु ॥ २७ ॥

**उत्कृष्टगृहलाभयोगाः**

धनेशलाभेशसमन्विते वा

क्षेत्रे तदीशेऽप्यथ कारके वा ।

विशेषतस्तच्छुभदृष्टियुक्ते

प्रभूतरूपं गृहमाहुरार्याः ॥ २८ ॥

**स्वदेशे गृहलाभयोगाः**

लग्नपस्य(स्य)सुहृत्स्वोच्चे स्थितो मित्रगृहेऽपि वा ।

उच्चस्थखेचरे वा(णा)पि दृष्टे चे(ष्टश्चे)त्स्वभुवि स्थितः ॥ २९ ॥

**रम्यभुवासयोगाः**

त्रिकोणकेन्द्रेषु गतो गृहेश्वरः

स्वराशिमित्रोच्चगृहस्थितो यदि ।

---

१. ससुहृत् चतुर्थस्थानगः ।

तदीयपार्श्वद्वयगौ शुभग्रहौ
निवासभू रम्यमनोहरा भवेत् ॥ ३० ॥

### जन्मदेशवासयोगः

पुरस्ताद्गृहनाथः स्याच्छ(थस्य श)त्रुखेटो भवेद्यदि ।
जन्मदेशे निवासः स्याज्जन्मनो जगतीतले ॥ ३१ ॥

### परदेशे गृहलाभयोगाः

गृहेशे चरराशि(भाग)स्थे चरराशिगतो(ते)ऽपि वा ।
विदेशे गृहलाभः स्याद्यदि सौम्यविलोकितः(ते) ॥ ३२ ॥

गृहस्थाने चरे लग्ने तदीशे चरराशिगे ।
तथैव तत्कारकेऽपि बन्धुस्थाने गृहं वदेत् ॥ ३३ ॥

### पुनरपि स्वस्थानादौ गृहलाभयोगाः

बन्धुस्थाने स्थिते नाथे स्वस्थाने तु गृहं वदेत् ।
एवं मिश्रे(चरे) द्विस्वभावे गृहं ज्ञेयं बुधोत्तमैः ॥ ३४ ॥

देहाधिनाथेन युते तु गेहे
गेहाधिनाथेऽपि गृहादिलाभः ।

### गृहनाशयोगाः

युते षडादौ तु विपर्ययः स्या-
द्गृहाधिपे देहपतौ च तद्वत् ॥ ३५ ॥

गेहाधिपे नाशगते यदा तु
पापेऽक्षिते तद्गृहनाशमाहुः ।
गेहेशसंयुक्तनवांशनाथे
नाशस्थिते चैव तु गेहनाशः ॥ ३६ ॥

इति मन्दिरचिन्ता

## ॥ शय्यासौख्ययोगाः ॥

मानेशे सुखराशिस्थे लाभनाथेन संयुते ।
लग्ने सुखेशसन्दृष्टे बहुशय्यादिलाभभाक् ॥ ३७ ॥

तदीशे शुभसंयुक्ते लग्नेशे शुभसंयुते ।
शयनस्थानतो(गे) नित्यं शय्यासौख्यं विनिर्दिशेत् ॥ ३८ ॥

गुरुणा भृगुणा शय्यास्थाने स्वोच्च(च्चे) निरीक्षिते ।
तदीशे शुभसंयुक्ते शय्यासौख्यं विनिर्दिशेत् ॥ ३९ ॥

## ॥ अथ क्षेत्रचिन्ता ॥

### बहुक्षेत्रलाभयोगाः

गृहेशे कर्मराशिस्थे कर्मेशे गेहमागते ।
बलयुक्ते धरासूनौ बहुक्षेत्रं विनिर्दिशेत् ॥ ४० ॥

कुजाधिष्ठितराशीशे चतुर्थाधिपसंयुते ।
चतुर्थे वा स्थितौ(ते) जातः बहुक्षेत्रसमन्वितः ॥ ४१ ॥

चतुर्थस्थे(र्थेशेऽ)क्षिते भौमे बहुक्षेत्रार्जितं(को) नरः ।
भाग्यराज्याधिपश्चै(पे चै)व तत्फलं च न संशयः ॥ ४२ ॥

बलाढ्ये कर्मराशिस्थे बन्धुस्थानाधिपे यदा ।
तैयोर्मित्रे[1] यदा तस्य बहुक्षेत्रं विनिर्दिशेत् ॥ ४३ ॥

स(सु)तुङ्गभस्थे हिबुकाधिनाथे
स्वक्षेत्रभे मित्रगृहे स्थिते वा ।
शुभग्रहे सौम्ययुतेऽक्षिते च
क्षेत्रादिवृद्धिं प्रवदेन्नराणाम् ॥ ४४ ॥

### स्वबललब्धक्षेत्रयोगौ

क्षेत्रेश्वरे क्षेत्रगते बलाढ्ये
लग्ने बलिष्ठे यदि गेहनाथे ।

---

१. मित्रक्षेत्रे इति पाठः साधुः ।

शुभग्रहैर्दृष्टिसमागमो(मे) वा
क्षेत्रं स्वकीयेन बलेन नीतम् ॥ ४५ ॥

भ्रातृक्षेत्रलाभयोगाः

भ्रातृकारकसंयुक्ते भ्रातृस्थानगते यदि ।
क्षेत्रे तदीश्वरे वापि भ्रातृक्षेत्रं विनिर्दिशेत् ॥ ४६ ॥
भौमान्विते भौमदृशा समेते
भ्रातुर्धनं क्षेत्रमुदाहरन्ति ॥ ४७ ॥

कलत्रक्षेत्रलाभयोगाः

कलत्रकारके क्षेत्रे तदीशे वा कलत्रभे ।
तदीशयोस्तथा मैत्रे कलत्रात्क्षेत्रमादिशेत् ॥ ४८ ॥

शत्रुक्षेत्रलाभयोगाः

षष्ठेश्वरे क्षेत्रगते बलाढ्ये
षष्ठे स्थिते वा गृहराशिनाथे ।
षष्ठेश्वरात्क्षेत्रपतौ बलाढ्ये
शत्रोः सकाशात्स धरामुपैति ॥ ४९ ॥

क्षेत्रनाशयोगः

क्षेत्रेश्वरे पापयुते धनस्थे
नीचारिगे क्षेत्रविशेष(नाश)मेति ।

क्षेत्रविक्रययोगः

स्वोच्चे स्थिते तद्भवनेश्वरे वा
पापान्विते विक्रयमेव भूमेः ॥ ५० ॥

इति क्षेत्रचिन्ता

॥ अथ वाहनचिन्ता ॥

वाहनलाभयोगाः

वाहनेशे बलयुते वाहने शुभसंयुते ।
शुभग्रहेण सन्दृष्टे वाहनादिफलं भवेत् ॥ ५१ ॥

चतुरश्रे(स्रे) शुभैर्युक्ते नायके शुक्रमिश्रिते ।
शुभक्षेत्रे शुभस्थाने वाहनं लभते नरः ॥ ५२ ॥

स्मरेशे केन्द्रकोणे वाप्यथ शुक्रसमन्विते ।
वाहनेशे तथा कर्मे(कामे) वाहनप्राप्तिमादिशेत् ॥ ५३ ॥

**नरवाहनलाभयोगः**

वाहनाधिपतौ केन्द्रे लग्नाधिपसमन्विते ।
पञ्चमाधिपदृष्टे च नरवाहनमादिशेत् ॥ ५४ ॥

**सुखवाहनयोगाः**

सुखे शुभयुते नाथे केन्द्रकोणे च संयुते ।
भाग्येशे परमोच्चस्थे सुखवाहनभाग्भवेत् ॥ ५५ ॥

**पुनरपि वाहनलाभयोगाः**

व्ययेशे सुखराशिस्थे तदीशे व्ययमाश्रिते ।
गुरुणा वीक्षिते वापि वाहनाप्तिं विनिर्दिशेत् ॥ ५६ ॥

सुखेशे नाशराशिस्थे शुक्रे मूढसमाश्रिते ।
गुरुणा संयुते राहौ वाहनं संभवेद्ध्रुवम् ॥ ५७ ॥

**आन्दोलिकावाहनलाभयोगाः**

चन्द्रः पश्यति भार्गवं यदि भवेच्चन्द्रात्तृतीये भृगुः
शुक्रो विक्रमसंस्थितो यदि शशी चान्दोलिका वाहनम् ।
जीवो वो भृगुजे समेऽपि हिबुके स्याद्युक्तदा वाहनं
नेत्रे धर्मेशयुक्ते सुखभनगते यत्र संबन्धतोऽपि ॥ ५८ ॥

**बहुवाजिलाभयोगः**

वाहनाधिपतौ स्वोच्चे कारके च बलान्विते ।
त्रिकोणकेन्द्रलाभस्थे बहुवाजिविवर्धनम् ॥ ५९ ॥

---

१. अयं भागोऽतीवाशुद्धः । तत्र "जीवो वा भृगुजोऽस्तमेति हिबुकं सयुक् तदा वाहनं नेत्रे धर्मपतौ सुखालयगते वा सौम्यसंबन्धतः" इति पाठेन भाव्यमिति भाति ।

### चतुरङ्गवाहनलाभयोगाः

भाग्यस्थिते वाहनराशिनाथे
शुक्रे च जीवे शुभराशियुक्ते ।
भाग्येश्वरे कोणचतुष्टये वा
बहुप्रदेशं चतुरङ्गयानम् ॥ ६० ॥

सौख्याधिपे शोभनखेचरेण
भाग्येश्वरेणापि युतेऽथवा स्यात् ।
सेनाबहुत्वं समुपैति जातो
बाहुल्यदेशान्तरसापि(गामि) यानम् ॥ ६१ ॥

शुक्रान्विते वा यदि वाहनेशे
देहान्विते वा सुखवाहनादीन् ।
देवेन्द्रपुज्येन युतेऽत्र लग्ने
वदन्ति सन्तश्चतुरङ्गयानम् ॥ ६२ ॥

### बहुवाहनलाभयोगाः

परमोच्चगते वित्ते भाग्येशे केन्द्रमाश्रिते ।
वाहने स्वोच्चखेटस्थे बहुवाहनयुग्भवेत् ॥ ६३ ॥

सुखेश्वरे केन्द्रगते तदीशे
लग्ने स्थिते वा बहुवाहनाढ्यः ।
कर्मेश्वरे लग्नगते तदीशे
कर्मस्थिते वा बहुवाहनाढ्यः ॥ ६४ ॥

भाग्येश्वरे लाभगते च लग्न-
नाथे सुखेशे यदि भाग्यराशौ ।
सुखाय भाग्ये तनुनायके वा-
प्यसंख्ययानानि(दि)युतः प्रसिद्धः ॥ ६५ ॥

---

१. "वाहनस्थे स्वोच्चखेटे" इति पाठः साधुः ।

२. सुखेटे इति पाठः साधुः ।

हिबुकेशे स्थिते लाभे तन्नाथेन समन्विते ।
बहुवाहनयोगोऽयं वदेद्दैवज्ञसत्तमः ॥ ६६ ॥

### नित्यं वाहनसंचारयोगः

वाहनेश्वर(शेऽरि)नीचस्थे कारके च बलान्विते ।
लाभे केन्द्रे त्रिकोणस्थे वाहने(हे च) रति नित्यशः ॥ ६७ ॥

वाहनेशे कुजयुते वीक्षिते सुरमन्त्रिणा ।
बहुप्रज्ञा(भा)करान्दोलावाहनाद्यभिवृद्धिमान् ॥ ६८ ॥

वाहनाद्वाहनाधीशे तदीशे शुक्रसंयुते ।
तदीशे केन्द्रकोणे वा वाहनाद्यभिवृद्धिमान् ॥ ६९ ॥

तृतीये हिबुके चन्द्रे शुभयुक्ते शुभेऽक्षिते ।
उच्चस्थे कर्मपे युक्ते तुरङ्गच्छत्रसंभवः ॥ ७० ॥

कर्माधिपे वा कर्मस्थे वाहनस्थेऽथ वीक्षिते ।
चतुर्थाधिपसंयुक्ते वाहनानां समृद्धिमान् ॥ ७१ ॥

भाग्येश्वरेण सहिते यदि वाहनेशे
जीवेऽक्षिते तनुगते बलपूर्णयुक्ते ।
स्वक्षेत्रतुङ्गसहिते यदि वा त्रिकोणे
भूनाथमानववशात्धनवाहनादीन् ॥ ७२ ॥

### दुर्वाहनलाभयोगाः

दुस्थारिमूढे यदि वाहनेशे
भाग्येश्वरेणापि निरीक्षिते वा ।
दुर्वाहनश्चञ्चलवाहनो वा
लाभाधिपेनापि निरीक्षिते तु ॥ ७३ ॥

### दीर्घकालं आन्दोलिकावाहनयोगाः

वाहनेशे गुरौ वापि भाग्यस्थाने शुभैर्युते ।
शुभक्षेत्रे दीर्घकालं यानमान्दोलिका भवेत् ॥ ७४ ॥

### द्वादशाब्दे वाहनलाभयोगः

लाभेशे सुखभावस्थे सुखेशे लाभसंयुते ।
द्वादशे वत्सरे प्राप्ते काले वाहनगो भवेत् ॥ ७५ ॥

### विंशे षट्त्रिंशे वा वर्षे नरवाहनलाभयोगौ

तुङ्गराशिं समाश्रित्य सौम्यशुक्रौ तथैव च ।
विंशे षट्त्रिंशके प्राप्ते नरवाहनभाग्भवेत् ॥ ७६ ॥

### त्रिंशाब्दात्परं नरवाहनलाभयोगः

वाहनाद्वाहने चन्द्रे तद्दू(द्यू)ने भृगुसंयुते ।
त्रिंशात्परतरे वर्षे नरवाहनभाग्भवेत् । ॥ ७७ ॥

### द्वात्रिंशेऽब्दे वाहनयोगः

वाहने रविसंयुक्ते स्वोच्चे तद्राशिसंस्थिते ।
युते शुक्रेण सन्दृष्टे द्वात्रिंशे वाहनं भवेत् ॥ ७८ ॥

### अश्वलाभयोगाः

सुगन्धवस्त्राभरणादि यानं
शुक्राद्भवेत्तत्सुखराशिगे वा(गैर्वा) ।
सेन्दौ चतुर्थाधिपतौ विलग्ने
तदीश्वरेणापि युतेऽश्वलाभः ॥ ७९ ॥

### ग्रहाणां वाहनकारकत्वम्

खट्वादिकं रवौ ज्ञेयं चन्द्रे चैव गजादिकम् ।
मेषादिकं कुजे ज्ञेयं बुधे तु घोटकादिकम् ॥ ८० ॥
नानामणिलसद्दोला गुरौ ज्ञेया च घोटकः ।
तथैव शुक्रे मन्दे तु महिष्यादिं वदेद्बुधः ॥ ८१ ॥

### वाहननाशयोगाः

दुःखस्थानाधिपे नीचे तृतीये रिपुमन्दिरे ।
पापग्रहेण सन्दृष्टे वाहानां नाशनं ध्रुवम् ॥ ८२ ॥

अस्तं गते वाहनेशे षष्ठाष्टमव्ययेऽपि वा ।
तदीशयुतसन्दृष्टे वाहनं नाशयेद्ध्रुवम् ॥ ८३ ॥
वाहनेशे युते दृष्टे संबन्धे(न्धैः) स्थितिकारके(कैः) ।
यदुक्तं मुनिना यानं विपरीते विनाशनम् ॥ ८४ ॥

इति वाहनचिन्ता

## ॥ अथ बन्धुचिन्ता ॥

### बन्धुपूज्यतायोगाः

बन्धुस्थानाधिपे सौम्ये शुभग्रहनिरीक्षिते ।
तत्कारके बलाढये वा बन्धुपूज्यो भवेन्नरः ॥ ८५ ॥
बन्धुस्थानेश्वरे सौम्ये शुभग्रहनिरीक्षिते ।
शशिजे बलसंयुक्ते बन्धुपूज्यो भवेन्नरः ॥ ८६ ॥
बन्धुस्थानगते जीवे तदीशे गुरुसंयुते ।
गुरुणा वीक्षिते वापि बन्धुश्रेष्ठो भवेन्नरः ॥ ८७ ॥

### बन्धुपालनयोगाः

लग्नेशे बन्धुभावस्थे बलहीनेऽपि कारके ।
पापान्विते पापमध्ये स्वबन्धून्पालयेत्सदा ॥ ८८ ॥
बन्धूपकर्ता तन्नाथे केन्द्रकोणायसंयुते ।
तत्कारके बलाढ्ये वा बन्धूनामुपकारकृत् ॥ ८९ ॥

### बन्धुनिन्द्यत्वयोगाः

बहुपापसमायुक्ते बन्धुनाथे तथैव हि ।
तत्कारके तथैव च बन्धूनां कुत्सितो भवेत् ॥ ९० ॥
षष्ठें(ष्ठे)ऽशे सुखभावस्थे रन्ध्रनाथेन संयुते ।
सुखेशे दुर्बले यस्य बन्धुनां कुत्सितो भवेत् ॥ ९१ ॥
नाथकारकसंयुक्तनवांशस्य च नायकः ।
नीचे शत्रुगृहे वापि बन्धूनां हेयकर्मकृत् ॥ ९२ ॥

**बन्धुकर्तृकत्यागयोगाः**

बन्धुभिस्त्यक्तदेहः स्यात्तदीशे पापसंयुते ।
क्रूर(रा)क्रान्ते क्रूरदृष्टे नीचारातिगृहेऽपि वा ॥ ९३ ॥

इति बन्धुचिन्ता

## ॥ अथ मातृचिन्ता ॥

**मातृवृद्धियोगाः**

लग्नाधिपे मातृभावे मातृपे लग्नगेऽपि वा ।
चन्द्रसंबन्धयोगेन मातृवृद्धिमुदीरयेत् ॥ ९४ ॥

मातृस्थानाधिपे केन्द्रे कोणे लाभस्थितो(ते) यदि ।
मातृसौख्ययुतो भोगी वाहनादिकसंयुतः ॥ ९५ ॥

बन्धुस्थानाधिपे सौम्ये बृहस्पतिसमन्विते ।
केन्द्रत्रिकोणसंस्थे वा मातृसौख्यं विशेषतः ॥ ९६ ॥

मातृस्थानाधिपे जीवे लग्ने माने च धर्मगे ।
सबले चन्द्रसन्दृष्टे मातृसौख्यं विनिर्दिशेत् ॥ ९७ ॥

मातृस्थानाधिपे चन्द्रे मातृस्थे मानगेऽपि वा ।
पूर्णे वा मित्रगेहस्थे मातृसौख्यं विनिर्दिशेत् ॥ ९८ ॥

**मातृस्नेहयोगाः**

लग्नाधिपे सुखे स्वोच्चे मित्रभूतौ परस्परम्[1] ।
शुभेऽक्षितौ शुभैर्युक्तौ मातृस्नेहं विनिर्दिशेत् ॥ ९९ ॥

**मातृशत्रुभावयोगाः**

शत्रुश्चेल्लग्ननाथस्य मातृभावाधिपो यदि ।
पापेऽक्षिते पापयुक्ते तच्छत्रुत्वं विनिर्दिशेत् ॥ १०० ॥

लग्नेशे लग्नराशिस्थे मातृस्थानाधिपे यदि ।
तथैव लग्नभावाद्वा तच्छत्रुत्वं विनिर्दिशेत् ॥ १०१ ॥

---

१. "लग्नाधिपसुखेशौ च" इति पाठः साधुः ।

### मातृसौख्याभावयोगाः

मातृस्थानाधिपे षष्ठे व्यये चाष्टमसंयुते ।
तदीशे(शैः) संयुते दृष्टे मातृसौख्यं न लभ्यते ॥ १०२ ॥

### मातृसौख्ययोगः

मातृस्थानाधिपे षष्ठे चन्द्रे मातृपतौ यदि ।
सप्तमाधिपतौ लाभे मातृसौख्यं विनिर्दिशेत् ॥ १०३ ॥

### मातृसपत्नीयोगाः

कुजलाभाधिपे(पौ) युक्ते(क्तौ) मातृकारकवीक्षिते(तौ) ।
सपत्नीमातृसंबन्धं(न्धो) जायते नात्र संशयः ॥ १०४ ॥

अष्टमाधिपभौमौ च युतौ संबन्धगौ यदा ।
द्विमातृयोगं विन्दन्ति केरलानां च संमतम् ॥ १०५ ॥

द्विदेहभे निशानाथे कारके वा बलान्विते ।
केन्द्रे शुभग्रहैर्दृष्टे सपत्नीमातरं वदेत् ॥ १०६ ॥

पितृकारकराशेर्वा हिबुके मातृकारकः ।
मातृकारकराशेर्वा नवमे तु निशाकरः ॥
वदन्ति निश्चयं धीरा द्विमात्रो(ता) र्जा(जा)यते नरः ॥ १०७ ॥

### मातृदीर्घायुर्योगाः

मातृस्थाने शुभैर्युक्ते तदीशे स्वोच्चराशिगे ।
कारके बलसंयुक्ते मातृदीर्घायुरादिशेत् ॥ १०८ ॥

मातृस्थाने शुभयुते कारके शुभसंयुते ।
तद्भावपे बलाढ्ये वा मातुरायुष्यमादिशेत् ॥ १०९ ॥

चन्द्रे बलिष्ठे यदि वा भृगौ वा
सौम्येऽक्षिते शोभनभावयुक्ते ।
चतुष्टये मातृगृहाच्छुभाढ्ये
मातुश्च दीर्घायुरुदाहरन्ति ॥ ११० ॥

### जननीनाशयोगाः

निशाकरे पापयुते स्मरे वा भृगौ तथैवं जननीविनाशम्(शः)।
सुखे शनौ मातृविनाशमेति पापेऽक्षिते चेदचिरेण नाशम् ॥ १११ ॥

पापग्रहाणां भवने शनौ वा पापान्विते मातृविनाशमेति।
शुभेक्षितश्चेदचिरेण मृत्युः उदाहरन्त्यत्र महानुभावाः ॥ ११२ ॥

### मातृमृत्युकालज्ञानम्

क्षीणो हीनबलः शशी च सुखपो मूढार(रि)नीचस्थितौ(तो)
[1]मातृस्थानपती च शत्रुगृहगौ नीचस्थितौ चास्तगौ।
तेषामम्बरचारिणां प्रथमतोऽप्यायाति[2] तद्वीक्षितौ
मातुर्मृत्युकराः स्मृतास्तु सततं तेषां दशायां ग्रहाः ॥ ११३ ॥

### जारमातृयोगाः

लाभाधिपो वा भौमो वा मातृकारकसंयुतः।
राहुदृष्टेऽपि संबन्धे जारमातृयुतो नरः ॥ ११४ ॥

### जारमातृयोगः वैश्यजारसंगमयोगः

कुजेन सहितश्चन्द्रः षष्ठे मातृगृहेऽपि वा।
मातृजारकरो ज्ञेन वैश्यसङ्गमकृद्भवेत् ॥ ११५ ॥

### क्षत्रियब्राह्मणजारसंगमयोगाः

रव्यन्विते क्षत्रियजातियुक्ता शुक्रेज्ययुक्ते द्विजपुङ्गवेन।
भृगोः सुतेनापि तथाविधेन व्यक्तं फलं तादृशमेव सत्यम् ॥ ११६ ॥

गुरुशुक्रयुते दृष्टे भवेद्ब्राह्मणसङ्गमः।
मिश्रे मिश्रफलं धीराः प्रवदन्ति हिं तादृशम् ॥ ११७ ॥

---

१. चन्द्रात् सुखपाच्च मातृस्थानपती इत्यर्थः।

२. सूर्यात् आयाति उदेति। तेन वीक्षितौ शशिसुखपौ ताभ्यां सुखपौ वा यदि भवतस्तर्हिं तेषां चन्द्रादीनां दशायां मातुर्मृत्युरिति भावः।

### नीचवैश्यशूद्रजारसंगमयोगाः

तथाविधे रात्रिकरे सराहौ(हु) केतौ सवित्री यदि नीचसक्ता ।
मन्देन युक्ते यदि शूद्रसक्ता वैश्येन सक्ता शशिसूनुयुक्ते ॥ ११८ ॥

### निश्चयेन जारजातयोगाः

पापान्तरे मातृगृहे तदीशे तत्कारके वाऽशुभदृष्टियुक्ते ।
लग्नेश्वराद्धीनबले सुखेशे जातस्तदानीं परजात एव ॥ ११९ ॥

लग्नेशभाग्येशसुखेशयुक्ते ।
षष्ठाधिपे स्यात्परजातएव ॥ १२० ॥

मातृस्थानस्थितौ चेत्कुजबुधसहितौ षष्ठरन्ध्राधिनाथौ
स्यातां यस्य प्रसूतौ भवति खलु नरश्चान्यजातस्तदानीम् ।
क्वापि स्थाने स्थितौ स्तः कलुषखगयुतौ भाग्यषष्ठाधिनाथौ
चेदेवं राहुणा वा तदनु च शिखिना संयुतौ वैश्य(वाऽन्य)जातः ॥

इति मातृचिन्ता

## ॥ आननदुर्गन्धयोगाः ॥

दुर्गन्धं दानवेज्ये शैनिभवतिशतां भानुजे विग्रहे स्या-
द्द्वेष्या(षा)धीशे बुधर्क्षे तदनु मकरगे तद्वदन्तीह काव्ये ।
केन्द्रस्थे ते(ने)न युक्स्याद(क्ताव)थ कविरविजौ स्वीयराशिस्थितौ चेत्
तद्वचन्द्रेऽब्जजा(या)ते तनुसदनगते चानने स्याद्विगन्धिः ॥ १२२ ॥

### गवादिपशुलाभयोगाः

सुखे मन्दे रवियुते चन्द्रे भाग्यगते यदि ।
लाभस्थानगते भौमे गोमहिष्यादिलाभभाक् ॥ १२३ ॥

शनिना संयुते कर्मनाथे केन्द्रे शुभान्विते ।
लग्नेशे बुधभे जाते(तः) पशुवादि(ध)रवे(वै)र्युतः ॥ १२४ ॥

---

१. शनिभवनगते भानुजे इति पाठः साधुः ।

मृदङ्गभेरीशङ्खाद्यैर्वाहनादिरवैर्युतः ।
राजयोगसमुद्भूते(तः) कर्मपे सौख्यपान्विते ॥ १२५ ।

क्षमागुणलाभयोगः मात्राज्ञावशगत्वयोगश्च

बन्धुस्थानाधिपे लग्ने देहेशे सुखराशिगे ।
क्षमावान् जायते जातो मातुराज्ञावशानुगः ॥ १२६ ॥

॥ इति श्रीदैवज्ञाभरणे चतुर्थभावविवेचनं नाम द्वादशः प्रकाशः ॥

आदितः श्लोकसङ्ख्या ७७१

---

॥ श्रीः ॥

# ॥ अथ त्रयोदशः प्रकाशः ॥

## ॥ पुत्रभावविवेचनम् ॥

पुत्रभावं प्रवक्ष्यामि यदुना मुनिनाधुना ।
गर्गादिकथितं यच्च जनानां हितकाम्यया ॥ १ ॥

## ॥ अथ बुद्धिचिन्ता ॥

### तीव्रबुद्धियोगाः

बुद्धिस्थानाधिपे सौम्ये शुभदृष्टिसमन्विते ।
बुद्धिस्थाने शुभयुते तीव्रबुद्धिं विनिर्दिशेत् ॥ २ ॥

कारके बलसंयुक्ते सुतेशे शुभवीक्षिते ।
गुरुशुक्रयुते दृष्टे तीव्रबुद्धिं विनिर्दिशेत् ॥ ३ ॥

बुद्धिस्थानाधिपे माने भाग्ये वा लग्नमाश्रिते ।
गुरुशुक्रयुते दृष्टे बुद्धिमार्गविशारदः ॥ ४ ॥

परेऽङ्गितज्ञो मेधावी कारके शुभसंयुते ।
नाथे वा परमोच्चस्थे सर्वेषां बुद्धिदो भवेत् ॥ ५ ॥

### उन्मादबुद्धियोगजडबुद्धियोगाः

लग्नं गते रिप्फगते दिनेशे चन्द्रे त्रिकोणे यदि वा धराजे।
उन्मादबुद्धिः स जडोऽथवा स्यात्

### कल्मषबुद्धियोगः

यातो(ते) हिते कल्मषबुद्धियुक्तः ॥ ६ ॥

पुनरपि उन्मादबुद्धिजडबुद्धियोगाः

लग्ने त्रिकोणे दिननाथचन्द्रौ शौर्ये गुरौ केन्द्रसमन्विते वा ।
सोन्मादबुद्धिः स भवेत्तदानीं सदारचारे यदि जन्मकाले ॥ ७ ॥

केन्द्रस्थिते(तौ) मन्दनिशाकरेण( रौ चेत् )
जडो भवेद्द्रुवधूपभोक्ता ।
केन्द्रे स्थिते(तौ) सौम्यनिशाकरे(रौ) वा
सौम्येन हीने(नौ) भ्रमसंयुतः स्यात् ॥ ८ ॥

मन्त्रिश्रेष्ठपदलाभयोगः

बुद्धिस्थानाधिपे केन्द्रे शुभग्रहनिरीक्षिते ।
लग्नार्थसुखकर्मेशबलाढ्ये(त्वे) मन्त्रिणां वरः ॥ ९ ॥

इति बुद्धिचिन्ता

॥ अथ देवताचिन्ता ॥

देवतोपासनयोगाः

पञ्चमाधिपसंयुक्ते यद्ग्रहस्य स्थितिर्भवेत् ।
तत्तत्प्रमाणदेवानामुपासकमुदीरयेत् ॥ १० ॥

ग्रहाणां देवताकारकत्वम्

रवीज्यौ वैष्णवौ ज्ञेयौ शिखिराहू शिवस्य च ।
हिमांशुश्च गणेशस्य दुर्गाभक्तो बुधस्य(धेन) च ॥ ११ ॥

मङ्गलेन च सामान्यं सौरभक्तः शनैश्चरे ।
पैञ्चमस्थं ग्रहं ज्ञेयं देवमेवमुपासनम् ॥ १२ ॥

सूर्यशङ्करपूजायोगः

पञ्चमे भानुसंबन्धे सूर्यशङ्करपूजनम् ।

यक्षिणीपूजायोगः

चन्द्रे तथाविधे जाते यक्षिणीदेवतां यजेत् ॥ १३ ॥

---

१. अत्र "पञ्चमस्थग्रहाज्ज्ञेयं दैवमेवमुपासनम्" इति पाठः साधुः ।

स्कन्दोपवासविष्णुसेवायोगाः

स्कन्दोपवासनिरतौ(तो) विष्णुना सहितो गुरुः(रौ) ।

चामुण्डापूजायोगः

चामुण्डा सैप्तमे शुक्रे(क्र)संबन्धेति(च) विनिर्दिशेत् ॥ १४ ॥

पिशाचीपूजायोगः

शैनौ च प्रशमायुक्ते पिशाचीं देवतां यजेत् ।

परपीडनदेवतापूजायोगः

राहुकेतुयुते तत्र परिपीडनदेवता ॥ १५ ॥

ब्रह्मज्ञानयोगः

विक्रमाधिपतौ सौम्ये ब्रह्मज्ञानी विदां वरः ।

विष्णुभक्तियोगः

विक्रमेशे गुरौ वापि विष्णुभक्तिपरायणः ॥ १६ ॥

गणेशस्कन्दभक्तियोगः

विक्रमेशे भृगौ वापि गिरिजासुतभक्तिमान् ।

पुनरपि विष्णुभक्तियोगः

विक्रमेशे शनौ वापि कमलानायकप्रियः ॥ १७ ॥

देवतान्तरदूषणाभावयोगः

जनने बलिनः सर्वे स्वोच्चमित्रादिकेन्द्रगाः ।

न कदाचिद्भवत्येवं देवतान्तरदूषणम् ॥ १८ ॥

इति देवताचिन्ता

## ॥ अथ पुत्रचिन्ता ॥

बहुसुतजननयोगाः

सुतगृहबुधजीवसौम्य(सोम)नाथैः

बलहीनैरवलोकिते युते वा (तैर्युतैर्वा) ।

---

१. पञ्चमे इति पाठः साधुरिति भाति ।

२. शनौ पञ्चमसंयुक्ते इति पाठः साधुः ।

बहुसुतजननं वदन्ति सन्तः
सुतभवने सबले विचिन्त्यमेतत् ॥ १९ ॥

पुंस्त्रीप्रजायोगाः

पुत्रकारकखेटस्तु स्त्रीक्षेत्रे वर्तते यदि ।
भवन्ति(ति) स्त्रीप्रजा तस्मिन् पुंक्षेत्रे जायते पुमान् ॥ २० ॥

पुत्रस्थाने तदीशे वा कारके स्त्रीषु वीक्षिते ।
स्त्री पुमानुभयं गर्भे भवन्ती(ती)ति वदन्ति हि ॥ २१ ॥

पुत्रेशे स्मरसंस्थिते नवमगे युक्तेऽथवा तद्गृ(द्गृ)हे
कर्कीतौलिवृषस्थिते फणिशशीशुक्रेऽक्षिते संयुते ।
जातः स्त्री पुरुषालये स्थितियुतं(ते) दृष्ट्वा(ष्टे) च पुत्रोद्भवं(वः)
जीवेत्संयुतपञ्चमे तनुगते पुत्रोद्भवं(वो) निश्चितम् ॥ २२ ॥

पुत्रलाभयोगाः

कुटुम्बात्मजकर्मेशाः केन्द्रस्था यदि जन्मनि ।
गुरौ बलान्विते वापि पुत्रप्राप्तिं विनिर्दिशेत् ॥ २३ ॥

लग्नपुत्राधिपे केन्द्रे शुक्रेज्य(जा)मित्रगे रवौ ।
विवाहाभ्यन्तरे प्राप्ते पुत्रलाभं विनिर्दिशेत् ॥ २४ ॥

सुतभे शुभमध्यस्थे शुभदृष्टियुतेऽथवा ।
सुतभेऽशयुते दृष्टे सुतप्राप्तिं विनिर्दिशेत् ॥ २५ ॥

लग्नपुत्राधिपौ युक्तावन्योन्यं वापि वीक्षितौ ।
परस्परक्षेत्रगौ वा पुत्रयोगा इमे स्मृताः ॥ २६ ॥

कालान्तरे पुत्रलाभयोगाः

जातो यदि स्मात्क्षितिसूनुलग्ने लग्ने शनौ पञ्चमभे रवौ च ।
पुत्रादिलाभं मुनयो वदन्ति कालान्तरे शोभनदृष्टियोगात् ॥ २७ ॥

---

१. जीवे संयुतपञ्चमे इति पाठः साधुः ।

पञ्चमाधिपतौ वित्ते शुभग्रहयुतेऽक्षिते ।
कारके बलसंयुक्ते पुत्रप्राप्तिर्न संशयः ॥ २८ ॥

हर्षस्थानगते शुक्रे पुत्रेशे गुरुसंयुते ।
स्वोच्चे चतुष्टये वापि पुत्रप्राप्तिर्न संशयः ॥ २९ ॥

**पुत्रजननयोगाः**

पुंग्रहे पुंग्र(गृ)हप्राप्ते पुंभावे पुत्रनायके ।
सुपुत्रजननं विन्द्यात्तं नरं नात्र संशयः ॥ ३० ॥

**पुत्रीजननयोगाः**

स्त्रीग्रहा बलसंयुक्ताः पुंग्रहा बलवर्जिताः ।
शनिचन्द्रौ पञ्चमस्थौ कन्याजननमादिशेत् ॥ ३१ ॥

पुत्रस्थानाधिपे सौम्ये शशिशुक्रयुतेऽक्षिते ।
मन्देन संयुते वापि स्त्रीप्रजा नात्र संशयः ॥ ३२ ॥

पुत्रस्थानाधिपे मन्दे बुधचन्द्रयुतेऽक्षिते ।
लाभे वा चन्द्रसंयुक्ते स्त्रीप्रजा नात्र संशयः ॥ ३३ ॥

बुधशुक्रौ [1]प्रथमस्थौ शनिचन्द्रयुतेऽक्षितौ ।
बलहीने गुरौ वापि कन्याजननमादिशेत् ॥ ३४ ॥

नवमेशो सुतेशो वा भाग्यस्थाने स्थितो(ते) यदि ।
स्त्रीक्षेत्रे स्त्रीग्रहे द्द(हैर्द्द)ष्टे युक्ते वा स्त्रीप्रजा भवेत् ॥ ३५ ॥

**नपुंसकजननयोगाः**

क्लीबभे पुत्रनाथे वा क्लीबग्रहयुतेऽक्षिते ।
क्लीबजं प्रसवं विन्द्याच्चाणक्यं(क्य)वचनं यथा ॥ ३६ ॥

पुत्रस्थानाधिपे मन्दे बुधराहुयुतो(ते) यदि ।
अथवा दृष्टिपातेन षण्ढं(डं) जातं वदन्ति हि ॥ ३७ ॥

---

१. पञ्चमस्थौ इति पाठः साधुः ।

### एकपुत्रयोगाः

लग्नात्पञ्चमगे जीवे जीवात्पञ्चमगे शनौ ।
मन्दात्पञ्चमगे राहौ पुत्रमेकं विनिर्दिशेत् ॥ ३८ ॥

### एकपुत्रैकपुत्रीयोगः

पुत्राधिपे तुङ्गयुते लग्नेश्वरसमन्विते ।
एकपुत्रो ह्येकपुत्रीत्येवं केरलनिश्चयः ॥ ३९ ॥

### पञ्चपुत्रयोगः

परमोच्चगते जीवे धनेशे राहुसंयुते ।
भाग्येशे भाग्यराशिस्थे पञ्चसङ्ख्याश्च सूनवः ॥ ४० ॥

### सप्तपुत्रयोगः

पुत्राद्भाग्यगते जीवे सुतेशे बलसंयुते ।
धनेशे कर्मराशिस्थे सप्तसंख्याश्च सूनवः ॥ ४१ ॥

### यमलगर्भद्वययुतसप्तसूनुयोगः

पञ्चमात्पञ्चमे मन्दे सुतस्थे पञ्चमाधिपे ।
सूनवः सप्तसंख्यास्तु द्विगर्भो यामलो भवेत् ॥ ४२ ॥

### षट्पुत्रजननयोगः तन्मध्ये पुत्रद्वयमरणयोगश्च

वित्तेशे पञ्चमस्थाने सुतस्थे सुतनायके ।
षट्संख्याः सूनवः प्रोक्ताः से तेषां द्विप्रजामृतः ॥ ४३ ॥

### दशपुत्रजननयोगाः

चतुर्थे पापसंयुक्ते षष्ठे पापसमन्विते ।
सुतेशे नाशराशिस्थे लग्नेशे नाशसंयुते ॥
कारके शुभसंयुक्ते दशसंख्यास्तु सूनवः ॥ ४४ ॥

---

१. तन्मध्ये द्वे प्रजे मृते इति पाठः साधुः ।

### द्वात्रिंशत्पुत्रजननयोगाः

पुत्रस्थानगते राहौ तदीशे पापसंयुते ।
नीचराशिगते जीवे द्वात्रिंशत्पुत्रसंभवः ॥ ४५ ॥

### चत्वारिंशे पुत्रजननयोगाः

लग्नभाग्यगते जीवे जीवाद्भाग्यगते रवौ ।
लग्नेशे बलसंयुक्ते चत्वारिंशे सुतं लभेत् ॥ ४६ ॥

### परजातयोगाः

सुतेशे राहुसंयुक्ते सुतस्थानसमाश्रिते ।
नेक्षितो(त) गुरुणा चन्द्रः(न्द्रे) परजातो भवेन्नरः ॥ ४७ ॥

सुतेशे नाशराशिस्थे राहुणा संयुतः शशी ।
पुत्रस्थानगते मन्दे परजातो भवेत्सुतः ॥ ४८ ॥

### दत्तपुत्रयोगाः

संपूर्णबलसंयुक्ताः पुत्रस्थानगता ग्रहाः ।
अदृष्टे(ष्टाः) पुत्रनाथेन तदा दत्तादयः सुताः ॥ ४९ ॥

पुत्रस्थाने बुधक्षेत्रे मन्दक्षेत्रेऽथवा भवेत् ।
बुधमन्दयुते दृष्टे तदा दत्तादयः सुताः ॥ ५० ॥

ग्रहयुक्तेऽपि नक्षत्रे सद्यो मुक्त्यपि वाखिला[1] ।
क्रूरग्रहक्रान्तधिष्ण्यो(ष्ण्ये) दत्तपुत्रो भवेन्नरः ॥ ५१ ॥

सुतपतिर्बलवान् शुभवीक्षितो रिपुगृहे शनिरी(वी)क्षणसङ्गतः ।
यदि तदा पुरुषस्य न सूनवो भवति चान्यरतां(सुतः) सुततां गतः ॥

### पुत्राभावयोगाः

पुंत्रस्थानाधिपे भौमे पापयोगनिरीक्षिते ।
लग्नेशे भौमराशिस्थे न कदाचित्सुतोद्भवः ॥ '१३ ॥

---

१. मुक्तेपि वा खलैः इति पाठः साधुरिति भाति ।

लग्नार्थदारपुत्रेशाः मु(स)बुधा जनने यदि ।
न कदाचित्सुतोत्पत्तिरिति शास्त्रविदो विदुः ॥ ५४ ॥

नवमसप्तमपञ्चमभावपा विबलिनो व्ययनैधनषष्ठगाः ।
सुतगृहं च स(न) तैरवलोक्यते बहुकलत्रवतोऽपि न सूनवः ॥ ५५ ॥

वागीशः पञ्चमेशश्च तथा धर्माङ्गपुत्रपाः ।
षडादित्रयसंस्थ(स्था)श्चेन्न भवेत्पुत्रजन्मनः(संभवः) ॥ ५६ ॥

### हीनबालकयोगाः

गुरौ(रु)लग्नहिमांशूनां पापैः पञ्चमसंस्थिते(तैः) ।
शुभदृष्टिविहीने च(नैश्च) वक्तव्याः हीनबालकाः ॥ ५७ ॥

पुत्रस्थानगते पापे पुत्रेशे पापमध्यगे ।
शुभदृष्टिविहीने च वक्तव्यो हीनबालकः ॥ ५८ ॥

### चिरेण पुत्रजननयोगः

पुत्रस्थानाधिपे दुस्स्थे दारेशेऽष्टमराशिगे ।
कुटुम्बेशे तथाभूते पुत्रप्राप्तिश्च स्व(श्चिरा)न्तरे ॥ ५९ ॥

### दारान्तरे पुत्रजननयोगः

दारान्तरे सुतोत्पत्तिः पुत्रेशे चरभे यदि ।

### पुनरपि चिरेण पुत्रजननयोगः

लग्नाधिपे तथाभूते चिरादेव सुतोद्भवः ॥ ६० ॥

### पुत्रशोकयोगाः

सुतेशे कर्मनाथे वा पापर्क्षे पापसंयुते ।
हाहाकारहतात्मा स्यात्पुत्रशोकात्तु मानवः ॥

### सर्पघातात्पुत्रनाशयोगः

पुत्रस्थानगते राहौ सर्पघातात्सुतक्षयः ॥ ६१ ॥

### सकलपुत्रनाशयोगाः

भौमः पञ्चमभवने जातं जातं विनाशयेत्पुत्रम् ।

पुनरपि पुत्रशोकयोगाः

मृगमत्स्यगते जीवे पुत्रस्थे पुत्रशोकभाग्भवति ॥ ६२ ॥

बहुकन्याजननयोगाः

कर्किस्थि(स्थे) बहुकन्याजननं मुनयो वदन्ति मनुजानाम् ॥ ६३ ॥

वंशनाशयोगाः

पापग्रहा रिप्फसुताष्टमस्थाः वंशस्य विच्छेदकरोऽर्थहीनः ।
निशाकरे लग्नगते च जीवे तत्सप्तमे भूमिसुते शनौ वा ॥ ६४ ॥
पापग्रहा बन्धुगताश्च सर्वे वंशस्य विच्छेदकरो हि जातः ।
लग्नान्त्यपुत्राष्टमराशियुक्ते पापग्रहे वंशविनाशहेतुः ॥ ६५ ॥

इति पुत्रचिन्ता

॥ इति श्रीदैवज्ञाभरणे पुत्रभावविवेचनं नाम त्रयोदशः प्रकाशः ॥

आदितः श्लोकसंख्या ८३६

---

श्रीः

## ॥ अथ चतुर्दशः प्रकाशः ॥

### ॥ रिपुभावविवेचनम् ॥

अथ शत्रुफलं वक्ष्ये ग्रहयोगबलादिभिः ।
यदुक्तं पूर्वमुनिभिस्तत्क्रमेण यथामति ॥ १ ॥

**व्याध्यादिसंभवकालनिर्देशः**

दृष्ट(षष्ठ)षष्ठपषष्ठस्थाः कुर्वन्ति स्वदशासु च ।
व्याधिव्यसनविघ्नानि मदोत्पत्तिं च ते ग्रहाः ॥ २ ॥

**दीर्घजठरयोगः**

षष्ठस्थानाधिपे चन्द्रे शुक्रे वा शुभवीक्षिते ।
जलराशिगतः सोऽपि जठरे दीर्घता भवेत् ॥ ३ ॥

**क्षीणजठरयोगः**

षष्ठेशे पापसंयुक्ते शुष्कराशिसमाश्रिते ।
षष्ठस्थागते शुष्के जठरे क्षीणता भवेत् ॥ ४ ॥

**देहे व्रणयोगाः**

षष्ठेशपापे(पौ) रिपुवृद्धियुक्ते(क्तौ)
देहे व्रणं चापि वदन्ति सन्तः ।

**शत्रुहतव्रणयोगः**

शुभान्विते शत्रुहतं व्रणं च

**॥ अथ देहे लाञ्छनयोगाः ॥**

स्वल्पं भवेत्तस्य सुलाञ्छनं वा ॥ ५ ॥

### ग्रहाणां शुक्लकृष्णचिह्नकारकत्वम्

रविराहू कृष्णचिह्नं कुर्वाते वपुषि द्रुतम् ।
चन्द्रकेतू तमश्शुक्रौ श्वेतचिह्नं कटीतटे ॥ ६ ॥

### ग्रहाणां देहदक्षिणवामगतलाञ्छनकारकत्वम्

भौमार्कबुधजीवानां दक्षिणे लाञ्छनं वदेत् ।
फणीन्दुशुक्रमन्दानां वामे भवति लाञ्छनम् ॥ ७ ॥

### ग्रहाणां मुखादिगतलाञ्छनकारकत्वम्

शुक्रस्य वदने पृष्ठे कुजस्यांसे बृहस्पतौ ।
कुक्षौ बुधस्य चन्द्रस्य मूर्ध्नि भानोः कटीतटे ॥ ८ ॥
ऊरौ शनौ पदे राहौ लाञ्छनानि भवन्ति च ।

### लाञ्छनज्ञानम्

स्थिते दृष्टे भवेच्चिह्नमिति शास्त्रविदो विदुः ॥ ९ ॥

### दक्षिणपार्श्वगतलाञ्छनज्ञानम्

गुर्वधिष्ठितराशीशः शुक्रेण सहितो यदि ।
जातस्य दक्षिणे पार्श्वे लाञ्छनं परिकीर्तितम् ॥ १० ॥

इति लाञ्छनचिन्ता

## ॥ अथ व्रणचिन्ता ॥

शत्रुस्थानाधिपे देहे राहुकेतुसमन्विते ।
देहे व्रणं भवेत्तस्य जातस्य मनुजस्य हि ॥ ११ ॥

राहुध्वजौ तनुगतौ तनुपे च दुस्स्थे
[1]देहेश(स)राहुशिखिनि व्रणकारि तत्स्यात् ।

---

१. सराहुशिखिनि देहभागे इत्यर्थः ।

### व्रणप्राप्तिकालज्ञानम्

दुस्स्थानपस्य शिखिराहुयुतस्य भुक्तौ
यद्वा तदीयफलपाद्विकुलत्वमङ्गे ॥ १२ ॥

षष्ठेश्वरे क्रूरग(यु)ते विलग्ने रन्ध्रे स्थिते वा व्रणदः शरीरे ।
कर्मस्थिते तादृशखेचरेन्द्रे [2] ........प्रदोऽङ्गः शुभदृष्टियुक्तः ॥ १३ ॥

### ग्रहाणां मूर्धादिस्थानविशेषे व्रणकारकत्वम्

व्रणाधिपयुतश्चापि षष्ठाष्टमगतो यदि ।
तेषा[3]मपि व्रणं वाच्यमादित्येन शिरोव्रणम् ॥ १४ ॥

शिरोऽर्कादिमुखं कण्ठश्रोत्रनासा(सं) च गुह्यकम् ।
स्कन्धौ पार्श्वे दृशौ पादौ प्रपादं कुक्षिमादिशेत् ॥
शनिभौमौ व्यये षष्ठे व्रणश्च(णः सं)जायते नरे ॥ १५ ॥

इति व्रणचिन्ता

## ॥ अथ कुष्ठयोगाः ॥

लग्नाधीशेन्दुपुत्रौ क्षितितनयनिशानायकौ क्वापि संस्थौ
युक्तौ स्वर्भानुना वा यदि भवति नरः केतुना श्वेतकुष्ठी ।
आदित्ये भौमयुक्ते तदनु शनियुते रक्तकुष्ठाख्यकुष्ठी
सार्के लग्नाधिनाथे व्ययरिपुनिधनस्थानगे तापगण्डः ॥ १६ ॥

चन्द्रो मेषे वृषे वा कुजशनिसहितः श्वेतकुष्ठी सरोगो
दैत्येज्यारेन्दुमन्दाति(स्ति)मिभवनगता(ताः) कर्कटालिस्थिता वा ।
अङ्गे सौम्येन हीनः(ने) परमकलुषकृद्रक्तकुष्ठी नरः स्या-
द्वागीशे(शो) भार्गवो वा यदि रिपुगृहगो मूर्तिगः(गैः) क्रूरखेटैः ॥

---

१. एकादशाधिपादित्यर्थः ।

२. अत्र " चिह्नप्रदोऽङ्गे शुभदृष्टियुक्ते " इति पाठः साधुः ।

३. तेनापि च इति पाठः साधुः ।

चन्द्रेण वाथ शिखिनापि च कुत्र संस्था[1]
लग्नेशसौम्यधरणीतनयाः स्थिताश्चेत् ।
गुह्ये वदन्ति सितकुष्ठरुजं बुधारौ
लग्नेऽपि वा यदि तदा तु तथैव कुष्ठः ॥ १८ ॥

लग्नाधिपबुधौ यत्र सूर्याङ्गारकसंस्थितौ ।
जातस्य रक्तकुष्ठं तु शीर्षे कर्णेऽपि वा वदेत् ॥ १९ ॥

इति कुष्ठयोगाः

॥ गण्डयोगाः ॥

गण्डः स्याद्रविणान्वितो(ता) ज्वरभवो लग्नाष्टषष्ठाधिपाः
चन्द्रेणाम्बुभवः कुजेन तदनु स्याद्ग्रन्थिशस्त्रोद्भवः ।
[2]पैत्र्योऽधोऽथ विदा रुजस्तु गुरुणा शुक्रेण ज(जा)योद्भवः
सौरेणान्त्यजसौ(चो)रजं(जः) सतमसा सर्पोद्भवं(वः) केतुना ॥ २० ॥

क्लेशयोगाः

क्लेशं समाहतं नाथे केन्द्रे सौम्यनिरीक्षिते ।
पापयोगवशान्नित्यं सर्वदा क्लेशमाप्नुयात् ॥ २१ ॥

समसप्तगते भौमे लग्ने भास्करशीतगौ(गू) ।
गुरौ भृगौ यदा षष्ठे तदा कष्टं समादिशेत् ॥ २२ ॥

॥ अथ रोगचिन्ता ॥

हीनरोगयोगाः

षष्ठाधिपे सौरियुते स्वगेहे(हें ऽ)शे रन्ध्रगे दृष्टियुते तथैव ।
[3]राहौ च दृष्टे युतहीनरोगं (?)

गर्भरोगयोगः

भौमे सदृष्टेऽपि च गर्भरोगः ॥ २३ ॥

---

१. पुत्रसंस्था इति पाठः साधुः ।

२. पित्तोत्थोऽथ इति पाठः साधुः ।

३. "राहुप्रदृष्टे युजि हीनरोगो भौमेन" इति पाठः साधुः ।

बलहीनेऽरिनाथे वा लग्नस्थे वा धरासुते ।
अजीर्णरोगो वातो वा गुल्मविद्रधिरुग्भवेत् ॥ २४ ॥

### प्लीहरोगयोगाः

षष्ठेशेन गते चन्द्रे पापदृष्टे न सौम्यगे ।
उदरे प्लीहरोगः स्यादिति ज्योतिर्विदो विदुः ॥ २५ ॥
शनौ लग्नाधिपे लग्ने पापखेटयुतेऽक्षिते ।
प्लीहरोगो(गी) भवेज्जातः शुभदृष्टेऽपि संशयः ॥ २६ ॥

### श्वासक्षयप्लीहगुल्मविद्रधिरोगयोगाः

पापमध्यगते चन्द्रे सप्तमे शनिसंयुते ।
[1]शोषक्षयं प्लीहगुल्मं(ल्मौ) विद्रधिं भजते नरः ॥ २७ ॥

### नाभिरोगयोगाः

[2]तनुचन्द्राधिपौ युक्तौ शत्रुस्थाने च संस्थितौ ।
नाभिस्थाने भवेद्रोगो नाथे वा(ना)पि प्रकल्पयेत् ॥ २८ ॥

### शूलप्रमेहरोगयोगः

षष्ठे भूमिसुते वापि तदीशे पापसंयुते ।
तदीशे पापसंयुक्ते(दृष्टे) शूलरोगप्रमेहभाक् ॥ २९ ॥

### पित्तरोगयोगः

रोगस्थानगते सूर्ये तद्भवे पापसंयुते ।
पापदृष्टे युते भानौ पैत्तकं रोगमादिशेत् ॥ ३० ॥

### श्लेष्मवातादिकृतरोगयोगाः

श्लेष्मवातादितः सौम्ये तथाभूते विशेषतः ।

### शूलातिसाररोगयोगः

तादृशेऽज्योऽतिदोषः स्याच्छुक्रे शूलातिसारकम् ॥ ३१ ॥

---

१. श्वासक्षयौ इति वराहमिहिराभिमतः पाठः ।

२. चन्द्रतन्वधिपौ युक्तौ इति पाठः साधुः ।

### गुल्मरोगयोगः

तथाभूतेन मन्देन गुल्मरोगोऽथवा ततः ।

### पिशाचकृतरोगयोगः

राहुकेतुसमायुक्ते रुजा पैशाचिकी स्मृता ॥ ३२ ॥

### निरन्तररोगयोगाः

षष्ठे कुजे बुधयुते भृगुचन्द्रदृष्टे
सौम्येन विक्षितयदापि तथैव वाच्यः ।
श्वासक्षयादिव्रणवा(जा)तमथाक्षिपीडां
कुर्वन्ति रोगमनिशं शुभमन्यथा स्यात् ॥ ३३ ॥

### प्रथमतृतीयवर्षयो रोगयोगः

षष्ठस्थानगते राहौ तस्मात्षष्ठगते शनौ ।
वर्षे रोगभयं तस्य त्रिवर्षे चक्षुरोगभाक् ॥ ३४ ॥

### पञ्चमनवमवर्षयोर्जलभययोगः

षष्ठादष्टमगे सूर्ये तद्व्यये चन्द्रसंयुते ।
पञ्चमे नवमाब्दे तु जलभीतिं विनिर्दिशेत् ॥ ३५ ॥

### द्वादशषोडशवर्षयोर्ग्रन्थिरोगयोगः

रन्ध्रेशे राहुसंयुक्ते तदीशे रन्ध्रकोणगे ।
द्वादशे षड्दशे प्राप्ते ग्रन्थिरोगादिपित्तवान् ॥ ३६ ॥

### तृतीयैकोनविंशवर्षयोर्गुल्मरोगयोगः

व्ययेशे रोगराशिस्थे तदीशे रोगराशिगे ।
त्रिवर्षैकोनविंशाब्दे गुल्मरोगं विनिर्दिशेत् ॥ ३७ ॥

### पञ्चदशत्रिंशवर्षयोः पीनसरोगयोगः

अष्टमे मन्दसंयुक्ते रन्ध्रे द्वादशगे कुजे ।
त्रिंशे पञ्चदशाब्दे तु पीनसारिं( तिं ) विनिर्दिशेत् ॥ ३८ ॥

---

१. "सौम्यैरवीक्षितयुतेऽपि" इति पाठेन भाव्यमिति भाति ।

### एकोनषष्टिवर्षे वातरोगयोगः

लग्नेशे रन्ध्रभावस्थे मन्दे शत्रुसमन्विते ।
एकोऽनषष्टिवर्षे तु वातरोगी भवेन्नरः ॥ ३९ ॥

### सर्वरोगभङ्गयोगः

व्ययस्थानाधिपे सौम्ये शुभग्रहसमन्विते ।
शुभग्रहेण सन्दृष्टे क्षयरोगादिकं न हि ॥ ४० ॥

### इति रोगचिन्ता

## ॥ अथ शत्रुचिन्ता ॥

### शत्रुपीडायोगाः

शत्रुस्थानाधिपे केन्द्रे पापग्रहनिरीक्षिते ।
षष्ठे वा पापबाहुल्ये शत्रुपीडां विनिर्दिशेत् ॥ ४१ ॥

पापग्रहेण संदृष्टे बलहीनेऽरिनायके ।
पापान्तरगते वापि शत्रुपीडां विनिर्दिशेत् ॥ ४२ ॥

षष्ठस्थानाधिपे षष्ठे चन्द्रभानुसमन्विते ।
कारकेऽपि बलैर्हीने शत्रुवर्गं विनिर्दिशेत् ॥ ४३ ॥

शत्रुस्थाने स्थिते दृ(तैर्दृ)ष्टे शत्रुराशिपतौ यदा ।
तयोश्चेत्क्रूरसंबन्धः शत्रुपीडायुतो नरः ॥ ४४ ॥

षष्ठे नीचेऽथवा पापे शन्यारफणिसंयुते ।
धूमारिपापसंयुक्ते तदीशे शत्रुवर्धनम् ॥ ४५ ॥

लग्नाधिपेऽर्कसंयुक्ते शत्रुराशिपतौ यदा ।
कारके नीचराशिस्थे शत्रुसत्वकरो भवेत् ॥ ४६ ॥

### शत्रुनिर्मथनयोगः

परस्परक्षेत्रगौ वा शत्रुलग्नाधिपौ यदि ।
तथा बलान्वितौ तौ चेच्छत्रुनिर्मन्थनं भवेत् ॥ ४७ ॥

पुनरपि शत्रुपीडायोगः

देहेशे शत्रुमध्यस्थे शत्रुभिः पीडितो भवेत् ।

शत्रुपीडाभावयोगाः

न शत्रुपीडनं तस्मिन् शुभदृष्टे शुभान्विते ॥ ४८ ॥

षष्ठस्थितग्रहाः(हः) क्रूरा(रो) बलहीनो भवेद्यदि ।
ग्रहोक्तवर्गजातश्च शत्रुमुत्पाटयत्यसौ ॥ ४९ ॥

पुत्रस्य शत्रुत्वयोगाः

पुत्रेशे रिपुभावस्थे षष्ठेशे गुरुसंयुते ।
व्ययेशे रिपुभावस्थे तस्य पुत्रो रिपुर्भवेत् ॥ ५० ॥

पितृवर्गकृतशात्रवयोगः

चित्रले नीचशत्रुस्थे षष्ठाधिरिपुतो[1] यदि ।
सति षष्ठस्थिते शत्रुः पितृवर्गेऽस्य जायते ॥ ५१ ॥

पितृजननीभ्रातृवर्गकृतशात्रवयोगाः

रवौ रिपुगृहे रिपुः पितृगतो निशानायके
तदीयजननींगतो धरणिजो(जे) निजभ्रातृषु ।

मातुलसुतपितृवर्गकृतशात्रवयोगाः

बुधे वसति मातुले सुतपितादिके[2] वाक्पतौ

वनिताशत्रुवर्गकृतशात्रवयोगाः

भृगौ तु वनितागणे भवति शत्रुवर्गे शनौ ॥ ५२ ॥

शत्रुनाशयोगाः

लग्नाधिपे शुभयुते मित्रक्षेत्रगतेऽपि वा ।
शत्रुक्षेत्रगतः सौरिः शत्रुनाशमुदीरयेत् ॥ ५३ ॥

---

१. षष्ठाधिव्ययपे इति पाठः साधुः ।

२. पितृसुतादिके इति पाठः साधुः ।

अष्टमे वा चतुर्थे वा राहौ केतौ स्थिते यदि ।
शत्रुस्थानाधिपे दृष्टे शत्रुच्छेदी भवेन्नरः ॥ ५४ ॥

लग्नेशशत्रुनाथाभ्यां वीक्षिते शत्रुनायके ।
पापान्विते पापदृष्टे स्वयमुत्पाटयत्यरीन् ॥ ५५ ॥

### शत्रुणा मैत्रयोगाः

शुभग्रहेण संदृष्टे शत्रुस्थानाधिपे यदा ।
शुभान्विते शुभक्षेत्रे तेन मैत्रं विनिर्दिशेत् ॥ ५६ ॥

लग्नेशाद्बलहीने तु शत्रुस्थानाधिपे यदा ।
शुभान्विते शुभैर्दृष्टे शत्रूणां मैत्रता भवेत् ॥ ५७ ॥

शरणागतशत्रूणां पालनं कुरुते सदा ।
तदीशे(शो) लग्नपे चै(पश्चे)वमन्योन्यं सु(सौ)हृदं गतौ ॥ ५८ ॥

इति शत्रुचिन्ता

## ॥ अथ ज्ञातिचिन्ता ॥

### ज्ञातिवृद्धिनाशयोगौ

ज्ञातीनां कारको भौमस्तद्बलाज्ज्ञातिवर्धनम् ।
बलाभावे धरासूनोर्ज्ञातीनामपि तद्वधम् ॥ ५९ ॥

### ज्ञातिबाहुल्यतत्सौहृदयोगौ

ज्ञातयो बहवः सन्ति षष्ठेशे केन्द्रमागते ।
शुभयोगेऽक्षणवशात्तेषां सौहृदमादिशेत् ॥ ६० ॥

पापयोगेऽक्षणवशाज्ज्ञातीनां निश्चितं(श्चयं) वदेत् ।
शत्रुस्थाने स्थिते स्वर्क्षे शत्रुराशिपतिस्त(तौ त)था ॥ ६१ ॥

---

१. शत्रुमन्दिरे इति पाठः साधुः ।

उच्चे मित्रे [1]स्वस्थिते वा ज्ञातिबाहुल्यमादिशेत् ।
ज्ञातयो बहवः सन्ति षष्ठेशे देवपूजिते ॥ ६२ ॥
शुभान्विते शुभैर्दृष्टे तदीशे शुभसंयुते ।

ज्ञातिपीडायोगः

गुरुशुक्रौ विलग्नेशौ षष्ठभावेश्वरान्वितौ ॥
शन्यारफणिसंयुक्तौ ज्ञातिपीडां विनिर्दिशेत् ॥ ६३ ॥

इति ज्ञातिचिन्ता

## ॥ चौर्ययोगाः ॥

षष्ठस्थानाधिपे राहौ पापखेचरसंयुते ।
अथवा दृष्टियोगेन चौरत्वं प्राप्यते नरः ॥ ६४ ॥
षष्ठाष्टमे स्वस्य मृ(यु)तौ बुधभौमौ यदा स्थितौ ।
जातो नरो घोरकर्म तस्करं(रः) कुरुते सदा ॥ ६५ ॥
षष्ठस्थानाधिपे पापे पापयोगसमन्विते ।
[2]विघ्ने पापसमायुक्ते सर्वदा विघ्नकारकौ ॥ ६६ ॥

उपदंशप्रीतियोगाः

उपदंशप्रियो नित्यं षष्ठे जीवे शशाङ्कजे ।
पापग्रहाणां मध्यस्थे चोपदंशप्रियो भवेत् ॥ ६७ ॥
पापग्रहाणां मध्यस्थे षष्ठेशे जीवसंयुते ।
शशिसौम्ययुते दृष्टे ह्युपदंशप्रियो भवेत् ॥ ६८ ॥

## ॥ अथ रसचिन्ता ॥

ग्रहाणां रसनीरसाधिपत्यम्

रसाधिपाः शुभाः सर्वे नीरसाः पापखेचराः ।

---

१. स्वांशके वा इति पाठः साधुः ।

२. अष्टमे इत्यर्थः ।

**रसाधिकप्रीतियोगाः**

शुभाधिका(पा)नां सर्वेषां बलाधिक्ये रसाधिकम् ॥ ६९ ॥
शुभाधिक्ये रसाधिक्यमन्यथाऽशुभभाजनम् ।
अन्यस्थानेऽपि वक्तव्यमित्युक्तं पूर्वसूरिभिः ॥ ७० ॥

**नानाविधरसप्रीतियोगाः**

रसस्थानाधिपे केन्द्रे शुभग्रहनिरीक्षिते ।
शुभग्रहेण संयुक्ते नानाविधरसाश्रितः ॥ ७१ ॥
केन्द्रत्रिकोणे(ण) निलये सौम्ये बहुरसान्वदेत् ।
पापैरप्युच्चस्वक्षेत्रनिलयेसाद(यैस्ताद)शान्रसान् ॥ ७२ ॥

**मिश्ररसप्रीतियोगाः**

षष्ठस्थानाधिपे जीवे षष्ठे वा दशमस्थिते ।
बुधदृष्टे बुधक्षेत्रे नित्यं मिश्ररसप्रियः ॥ ७३ ॥

**आम्लरसप्रीतियोगः**

कुजदृष्टे भृगौ षष्ठे भौमक्षेत्रसमन्विते ।
दिवसेशेन सन्दृष्टे त्वम्लभुक्स नरो भवेत् ॥ ७४ ॥

**कटुरसप्रीतियोगः**

षष्ठाधिपे रवियुते केन्द्रकोणालयस्थिते ।
अथवा दृष्टसंबन्धे कटुभोक्ता भवेन्नरः ॥ ७५ ॥

**लवणरसतिक्तरसप्रीतियोगौ**

लवणप्रियवान्भुक्तौ चन्द्रयोगेक्षणाद्वदेत् ।
तिक्ताधिकप्रियो नित्यं कुजयोगेक्षणाद्वदेत् ॥ ७६ ॥

**मिश्ररसप्रीतियोगः**

मिश्रीकृते(तं) रसं ज्ञेयं(नित्यं) सौम्ययोगेऽक्षणाद्वदेत् ।

**माधुर्यरसप्रीतियोगः**

एवं गुरुवशाज्ज्ञेयं माधुर्यरसभोजनम् ॥ ७७ ॥

आम्लरसप्रीतियोगः

अ(आ)म्लाधिकरसग्राही शुक्रसंयोगवीक्षणात् ।

कषायनीरसप्रीतियोगाः

कषायन(नी)रसं भुक्तं शनिसंयोगवीक्षणात् ॥ ७८ ॥

इति रसचिन्ता

## ॥ विप्रलंभचौर्यादियोगः ॥

षष्ठेशे भौमसंयुक्ते राहुकेतुनिरीक्षिते ।
भौमक्षेत्रगते वापि विप्रला(लं)भादिचौर्यभाक् ॥ ७९ ॥

॥ इति श्रीदैवज्ञाभरणे रिपुभावविवेचनं नाम चतुर्दशः प्रकाशः समाप्तः ॥

आदितः श्लोकसङ्ख्या ९१५

---

॥ श्रीः ॥

## ॥ अथ पञ्चदशः प्रकाशः ॥

### ॥ कलत्रभावविवेचनम् ॥

### ॥ अथ मेहनवृषणचिन्ता ॥

**दीर्घमेहनयोगाः**

दारेशे राहुसंयुक्ते मन्दसंबन्धगो(गे) यदि ।
दीर्घशेफो भवेत्तस्य केतुयोगेऽपि दीर्घता ॥ १ ॥

**वक्रमेहनयोगाः**

वागीशो भार्गवो वापि रिपुलग्नौ(ग्न)स्थितौ यदि ।
पापखेटैः सुसंदृष्टे(ष्टौ) वक्रलिङ्गं विनिर्दिशेत् ॥ २ ॥

**सममेहनयोगाः रोगयुक्तमेहनयोगाश्च**

गुरुशुक्रयुते दारे तदीशे गुरुशुक्रभे ।
समशेफो भवेत्तस्य रोगयुक्तं शुभेतरम्(रैः) ॥ ३ ॥

**अण्डरोगयोगाः**

कुजार्किफणिसंयुक्तः षष्ठस्थानगतो यदि ।
गुरुराहुद्वयोर्ल(यं ल)ग्ने चाण्डरोगं विनिर्दिशेत् ॥ ४ ॥

**वृहद्वृषणयोगः**

भार्गवे भौमसंयुक्ते रन्ध्रस्थानगतो(ते) यदि ।
जात(तो)गण्डेन सञ्जातो जातस्य वृषणं बृहत् ॥ ५ ॥

**भूहेतुकवृषणवृद्धियोगः**

भौमयुक्ते भृगुसुते भौमक्षेत्रेऽपि संस्थिते ।
भूहेतोर्मुष्कवृद्धिः स्याज्जातस्य मनुजस्य च ॥ ६ ॥

जलहेतुकवृषणवृद्धियोगः

भौमर्क्षे रविशुक्रौ च नपरौ गुरुभार्गवौ ।
१कैललामुष्कवृद्धिं च नितान्तं जातजीवितम् ॥ ७ ॥

मूत्रकृच्छ्रादिजलरोगयोगाः

कामे जलग्रहयुते कामेशेऽपि तथाविधे ।
कृच्छ्रादिजलरोगः स्यान्नो चेद्दृष्टः(ष्टे) शुभग्रहैः ।
सुतस्थानेऽशुभाक्रान्ते मूत्रकृच्छ्रादिकं भवेत् ॥ ८ ॥

सप्तमे जलराशौ चेल्लग्ने जलखगे यदि ।
ब(ख)लग्रहेण संदृष्टे युक्ते वा मूत्रकृच्छ्रभाक् ॥ ९ ॥

शन्यर्कारफणीन्द्राणां(न्द्रैश्च) संयुक्ते मदनगृहे ।
जलराशौ यदि तदा बहुमूत्रोद्भवं(वां) रुजम् ॥ १० ॥

षष्ठेशे सप्तमाधीशे व्ययाधिपसमन्विते ।
भानुजेनापि संदृष्टे मूत्रकृच्छ्रं विनिर्दिशेत् ॥ ११ ॥

सप्तमे बहवः पापास्तदीशे षष्ठराशिगे ।
मूत्रकृच्छ्रं भवेत्तस्य राहुदृष्टेऽपि रोगभाक् ॥ १२ ॥

इति मेहनवृषणचिन्ता

## ॥ अथ योनिचिन्ता ॥

दीर्घभगयोगाः

जलग्रहस्थे(हते) यदि दारनाथे जलर्क्षगे वापि निरीक्षिते वा ।
दाराधिपे पापखगेन दृष्टे दीर्घं भगं तत्र वदन्ति धीराः ॥ १३ ॥

ह्रस्वभगयोगाः

शनिचन्द्रयुते दारे(कामे) दारेशे तद्गृहस्थिते ।
ह्रस्वं भगं भवेत्तस्याः स्त्रिया एवं विनिर्दिशेत् ॥ १४ ॥

---

१. "सलिलान्मुष्कवृद्धिं च" इति पाठः साधुः ।

शनिचन्द्रविदां मध्ये यत्रैकस्मिन्मदेश्वरः(रे) ।
ह्रस्वं भगं समुद्दिष्टं स्त्रिया एवं विनिर्दिशेत् ॥ १५ ॥

**समभगयोगाः व्रणयुक्तभगयोगाश्च**

गुरु(रौ) शुक्रे दारनाथे युते तत्क्षेत्रगेऽपि वा ।
समं भगं भवेत्तस्याः पापयुक्तं(क्ते) व्रणं भवेत् ॥ १६ ॥

**दुर्गन्धभगयोगः स्वल्पभोगयोगश्च**

दारेशे चरराशिस्थे शुक्रे पापसमन्विते ।
दुर्गन्धं च भगद्वारे स्वल्पभोगं वदेत्ततः ॥ १७ ॥

**इति भगचिन्ता**

## ॥ अथ कामचिन्ता ॥

**अतिकामुकयोगाः**

कलत्रभाग्यनायके(कौ) विलोकिते(तौ) समन्विते(तौ) ।
सुरारिपूजितेन वै नरो भवेत्स कामुकः ॥ १८ ॥

यस्य जायागृहे शुक्रे(क्रो) जन्मन्यतिबलान्वितः ।
बुधयुक्तेऽक्षितस्तिष्ठेत्स भवेदतिकामुकः ॥ १९ ॥

तनौ[1] भृगौ तनौ माने परस्परगृहाश्रितौ ।
दारस्थाने शुभैर्दृष्टे कामुको भवति ध्रुवम् ॥ २० ॥

स्त्रीलोलः कामुको जातो मदे जीवे तनौ भृगौ ।
अथवा सबुधे लग्ने कामेशो तत्त्रिकोणगे ॥ २१ ॥

क्षोणीपुत्रेण दृष्टे(ष्टः) प्रथम[2]सुरगुरुर्लग्नतः षष्ठगोऽयं
कामाधिक्यं नराणां जनयति नियतं पापदृष्टेऽपि[3] शेषान् ।
काव्ये स्वीयालयस्थे तदनु मिथुनगे कामवान्मानवः स्या-

---

१. अत्र "तनौ भृगुः शनिर्माने" इति पाठः साधुः ।

२. प्रथमो मेषः तद्गतः सुरगुरुरित्यर्थः ।

३. अत्र "पापदृष्टो विशेषात्" इति पाठः साधुः ।

अल्पकामयोगः

न्मूर्तौ सप्ताश्वसूनौ धनुषि च वृषभे चेत्पुमानल्पकामः ॥ २२ ॥

इति कामचिन्ता

## ॥ अथ दारचिन्ता ॥

कुटुम्बकर्मस्मरराशिनाथाः समन्विता दारमुदीरयन्ति ।

परस्त्रीसुरतयोगः

लग्नाधिपे पापयुते च दृष्टे जातः परस्त्रीसुरतः कुमार्गी ॥ २३ ॥

कुटुम्बेशकुलत्रेशषष्ठेशकर्मयो यदि ।

तिष्ठन्ति लग्ने नियतं परदाराङ्गसङ्गदाः ॥ २४ ॥

वृषलीसंगमयोगः रजकीसंगमयोगश्च

बुधशुक्रौ सुखस्थौ वा कारके राहुसंयुते ।

वृषलीसङ्गमं विद्याद्रजकीसङ्गमं तथा ॥ २५ ॥

वैश्यासंगमयोगः ब्राह्मणभार्यासंगमयोगश्च

बुधे वैश्या च विज्ञेया गुरौ ब्राह्मणभार्यया ।

विधवासंगमयोगः

कलत्रकारके क्षेत्रे कुज(जो)राहुर्यदा भवेत् ।

विधवागमनं पुंसामिति केरलसंमतम् ॥ २६ ॥

रजक्यादिनीचस्त्रीसंगमयोगाः

सुखेशे कुजसंयुक्ते सुखे वा सप्तमे स्थिते ।

संयोगं रजकस्त्रीणां नीचस्त्रीसङ्गमोऽपि वा ॥ २७ ॥

गर्भिणीसंगमयोगः

सप्तमे बुधसंयुक्ते गर्भिणीसङ्गमं वदेत् ।

तद्योगे सूतकं दोषं वदेत्केरलनिश्चयात् ॥ २८ ॥

पुनरपि परदारसंगमयोगाः

षष्ठे तृतीये व्ययगे मदेन(च) भृगोः सुते नेत्रपसंयुते वा ।

पापेऽक्षिते तत्परदारगामी शुभेऽक्षिते तद्वदु(त्स्वक)दारयुक्तः ॥ २९ ॥

### मातृसंगमयोगाः

सुखेश्वरे भूमिसुतेन युक्ते सुखे स्थिते पापनिरीक्षिते वा ।
चण्डांश(शु)संयुक्तनवांशनाथे तथाविधे मातरि दोषमाहुः ॥ ३० ॥

पापेऽक्षिते पापयुते शशाङ्के दिवाकरे वा यदि केन्द्रराशौ ।
क्रूरे सुखे वा यदि पापदृष्टे जातो नरः स्यादिह मातृगामी ॥ ३१ ॥

### मातृसमस्त्रीसङ्गमयोगाः

पापे सुखे वा सुखभावनाथे पापान्विते सौम्यदृशा विहीने ।
दारेश्वरे लग्नपतौ [1]विहीने जातो नरो मातृसमानगामी ॥ ३२ ॥

### प्रकटव्यभिचारयोगः

तृतीयषष्ठव्ययगे मदेशे प्रकाशमेतद्रिपुदृष्टियुक्ते ।

### गुप्तव्यभिचारयोगः शतस्त्रीसङ्गमयोगश्च

[2]भावं च तूर्णं यदि मित्रदृष्टं गुप्तं भवेत्तच्छतसंख्यमेति ॥ ३३ ॥

[3]एतत्पतिप्रसहिते यदि वा च शुक्रे जातः परस्त्रीशतदारगामी ।
स्त्रीजातके तद्विपरीतमाहुः शतं पतीच्छा(न्सा) गमनं करोति ॥ ३४ ॥

### वन्ध्यासङ्गमयोगः

वन्ध्यासङ्गं विजानीयान्मदस्थाने यदा रविः ।

### उन्मत्तस्त्रीसङ्गमयोगः

उन्मत्तस्त्रीरतो ज्ञेयो दारस्थाने यदा शशी ॥ ३५ ॥

वन्ध्या(न्ध्या)प्रियासङ्गमनं रवौ स्यात् मदे शशाङ्के भवनैः समानम् ।

### रजस्वलासंगयोगः

रजस्वलासङ्गमनं कुजे तु बाल्याङ्गनासङ्गमनं च वाच्यम् ॥ ३६ ॥

---

१. हीनबले इत्यर्थः ।

२. "भावश्चतुर्थो यदि मित्रदृष्टः" इति पाठः साधुः ।

३. कामेश्वरेते यदि वा च शुक्रे इति पाठः साधुः ।

**वेश्यावैश्याहीनाङ्गनासङ्गमयोगः**

बुधे तु वेश्यागमनं मदस्थे हीनाङ्गनासङ्गमनं वणिज्जा(ग्जया) ।

**ब्राह्मणभार्यासङ्गमयोगः**

मदे गुरौ ब्राह्मणभार्यया वा

**रहस्यस्त्रीसंगमयोगः**

भृगौ तु गुह्यान्वितभाविनी वा ॥ ३७ ॥

**पुष्पिणीहीनस्त्रीसंगमयोगः**

स पुष्पिणीजात(ति)विदी(ही)नगामी नरो भवेत्तेन शनिध्वजौ द्वौ ।

**गर्भिणीसंगमयोगः**

राहौ मदे गर्भिणीसङ्गमः स्या-

**कृष्णकुब्जस्त्रीसंगमयोगः**

त्कृष्णा च कुब्जा च शनौ वदन्ति ॥ ३८ ॥

**विधवासंगमयोगः**

जीवो भृगुर्वा फणियुक् च यत्र गामी भवेन्नाविधवाङ्गनायाः(स्ताः) ।

**गर्भिणीसंगमयोगः**

शुक्रालये वा स्मरभे बुधे च गर्भान्वितस्त्रीसुरतं वदन्ति ॥ ३९ ॥

**इति दारचिन्ता**

## ॥ अथ मैथुनचिन्ता ॥

**उत्तममध्याल्पसुरतयोगाः**

दारेशे गुरुसंयुक्ते गुरुक्षेत्रगतेऽपि वा ।
तथैव भृगुसंबन्धे विशेषरतिमादिशेत् ॥ ४० ॥

दाराधिपे भौमदृष्टे रविचन्द्रयुतेऽपि वा ।
रतिं मध्यं(ध्यां) विजानीयात्केरलानां तथा मतम् ॥ ४१ ॥

स्वल्पं रतं वदेत्तत्र दारेशे शनिसंयुते ।
राहौ(हु)दृष्टे रते हीनं केरलानां च संमतम् ॥ ४२ ॥

यानेे चन्द्रग्रहर्क्षे वपुषि भृगुयुते मानवस्तोषदायी
सीमन्तान्य(न्तिन्या)रते स्यान्न खलु मदनगं भार्गवं लग्ननाथः ।
पश्येत्स्वीयालयस्थो यदि रहसि तदा कामिनीतोषदाता
न स्यादेवं हिमांशुर्दिनकरसुतयुग्भूमिजे खे सुखे वा ॥ ४३ ॥

**पशुमैथुनयोगाः**

मन्दे[1] सूर्ये सुखे भौमे पशुवन्मैथुनं वदेत् ।
राहौ कलत्रे भौमे वा सुखे तादृशमैथुनम् ॥ ४४ ॥
केन्द्रे त्रिके पापयुते पशुवन्मैथुनं वदेत् ।
मन्दे सूर्ये सुखे भौमे पशुवन्मैथुनं वदेत् ॥ ४५ ॥

**इति मैथुनचिन्ता**

## ॥ अथ भगचुम्बनयोगाः ॥

शनैश्चरे भृगुयुते अथवा भृगुवीक्षिते ।
भृगुक्षेत्रे गते वापि भगचुम्बनकृन्नरः ॥ ४६ ॥
कर्मेशे मन्दसंयुक्ते कुजक्षेत्रगते यदा ।
गुरुसंबन्धयोगेषु भगचुम्बनमादिशेत् ॥ ४७ ॥
मन्दे[2] वा भृगुसंदृष्टे भृगुणा सहितो(ते)ऽपि वा ।
भृगुक्षेत्रगते वापि भगचुम्बनभाग्भवेत् ॥ ४८ ॥
कुटुम्बनाथे मन्दे वा(न) युते दृष्टेऽथवापि वा ।
भगचुम्बनकृन्मत्तो(त्तः) केरलानां च संमतम् ॥ ४९ ॥
[3]स्मरेशतुङ्गे शुभसप्तमस्थे भूमीसुते सप्तमराशियुक्ते ।
अनेकभार्य(र्यो) बुधमन्दराहौ कामान्धनारीभगचुम्बनं च ॥ ५० ॥

**इतिभगचुम्बनयोगाः**

---

१. अत्र " मदे सूर्ये " इति पाठः साधुः ।

२. अत्र " मदे वा भृगुसंदृष्टे " इतिं पाठः साधुः ।

३. " तुङ्गे स्मरेशे शुभदे स्मरस्थे " इति पाठः साधुः ।

### सूपदध्याज्यभक्षणयोगाः

आयग्रहेऽपि दारेशे जलसंबन्धसंयुते ।
भुक्तीशेनापि संदृष्टे सूपदध्याज्ययुग्मवेत् ॥ ५१ ॥

दारेशे भृगुपुत्रे वा पूर्णचन्द्रनिरीक्षिते ।
पापैरदृष्टे युक्ते वा सूपदध्याज्ययुग्भवेत् ॥ ५२ ॥

### गुडक्षीरप्रीतियोगाः

यत्क्षेत्रगे दारनाथे तत्क्षेत्राधिपवीक्षिते ।
शुभग्रहाणां संबन्धे गुडक्षीरप्रियो भवेत् ॥ ५३ ॥

## ॥ अथ विवाहचिन्ता ॥

### बाल्यविवाहयोगाः

### एकादशाब्दे विवाहयोगः

लग्नात्केन्द्रगते शुक्रे लग्नेशो मन्दराशिगे ।
वत्सरैकादशे प्राप्ते विवाहं लभते नरः ॥ ५४ ॥

लग्ने कुटुम्बे यदि वा कलत्रे शुभान्विते शोभनवर्गयुक्ते ।
तदीश्वरे शोभनदृष्टियुक्ते बाल्ये विवाहादिकमाहुरार्याः ॥ ५५ ॥

### पञ्चमे नवमे वा अब्दे विवाहयोगः

दारेशे शुभराशिस्थे स्वोच्चस्वर्क्षगते भृगौ ।
पञ्चमे नवमाब्दे तु विवाहः प्रायशो भवेत् ॥ ५६ ॥

### सप्तमे एकादशे वा अब्दे विवाहयोगः

दारस्थानगते सूर्ये तदीशे भृगुसंयुते ।
सप्तमैकादशे वर्षे विवाहः प्रायशो भवेत् ॥ ५७ ॥

### दशमे षोडशे वा अब्दे विवाहयोगः

कुटुम्बस्थानपे शुक्रे दारेशे जलराशिगे ।
दशमे षोडशाब्दे च विवाहः प्रायशो भवेत् ॥ ५८ ॥

---

१. अत्र "आये गृहेपि" इति पाठः साधुः ।

### एकादशाब्दे विवाहयोगः

लग्नात्केन्द्रगते शुक्रे लग्नेशे मन्दराशिगे ।
एकादशे वत्सरे च विवाहं लभते नरः ॥ ५९ ॥

### द्वादशे एकोनविंशे वा अब्दे विवाहयोगः

लग्नात्केन्द्रगते शुक्रे तस्माज्जामित्रगः शशी ।
द्वादशैकोनविंशे च विवाहं(हो) निश्चयं भवेत् ॥ ६० ॥

### द्वादशाब्दे विवाहयोगः

भार्यास्थाने गुरुयुते शुभग्रहनिरीक्षिते ।
गुरौ च तत्र संस्थे वा द्वादशाब्दे विवाहकम् ॥ ६१ ॥

### त्रयोदशाब्दे विवाहयोगः

धनेशे लाभराशिस्थे दिनेशे धनराशिगे ।
अब्दे त्रयोदशे प्राप्ते विवाहं लभते नरः ॥ ६२ ॥

### पञ्चदशाब्दे विवाहयोगः

दू(द्यू)नेशे लाभराशिस्थे लग्नेशे कर्मराशिगे ।
अब्दे पञ्चदशे प्राप्ते विवाहः प्रायशो भवेत् ॥ ६३ ॥

### अष्टादशाब्दे विवाहयोगः

चन्द्राज्जामित्रगे शुक्रे शुक्राज्जामित्रगे शनौ ।
वत्सरेऽष्टादशे प्राप्ते विवाहः प्रायशो भवेत् ॥ ६४ ॥

### प्रौढविवाहयोगाः

### द्वाविंशे सप्तविंशे वा अब्दे विवाहयोगः

के(च)न्द्राज्जामित्रगे शुक्रे तदीशे लाभराशिगे ।
द्वाविंशे सप्तविंशाब्दे विवाहं लभते नरः ॥ ६५ ॥

---

१. "गुरुदृष्टे कलत्रे वा" इति पाठः साधुः ।

**त्रिंशे सप्तविंशे वा अब्दे विवाहयोगः**

भाग्याज्जामित्रगे शुक्रे तद्दू(द्यू)ने दारनायके ।
त्रिंशे वा सप्तविंशाब्दे विवाहं लभते नरः ॥ ६६ ॥

**पञ्चविंशे त्रयस्त्रिंशे वा अब्दे विवाहयोगः**

रन्ध्रेशे रन्ध्रराशिस्थे लग्नेशे भृगुसंयुते ।
पञ्चविंशे त्रयस्त्रिंशे विवाहं लभते नरः ॥ ६७ ॥

**एकत्रिंशे चतुस्त्रिंशे वा अब्दे विवाहयोगः**

भार्याभाग्यगते शुक्रे तद्व्यये राहुसंयुते ।
एकत्रिंशे चतुस्त्रिंशे दारलाभं विनिर्दिशेत् ॥ ६८ ॥

क्रूरे कलत्रेशयुत(ते)त्रिकोणे तत्कारके पापसमन्विते वा ।
कुटुम्बराशौ यदि वात्र सन्तः एवं विवाहं कथयन्ति नूनम् ॥ ६९ ॥

कुटुम्बे वा विलग्ने वा दारस्थाने शुभेतराः ।
नीचारातिगृहस्थाश्चेद्विवाहं(हो) दूरतो भवेत् ॥ ७० ॥

लग्नेशान्मदराशेर्वा दूरे भार्याधिपो यदा ।
तदा दूरे विवाहः स्यादन्यथा बाल्यतो भवेत् ॥ ७१ ॥

## ॥ विवाहसङ्ख्या ॥

**विवाहद्वययोगः**

कलत्रे ग्रहसंयुक्ते कलत्रेशे तु नीचगे ।
पापे कलत्रराशिस्थे विवाहद्वयमादिशेत् ॥ ७२ ॥

कलत्रे वा कुटुम्बे वा पापदृग्योगसंयुते ।
तदीशे बलहीने तु कलत्रान्तरभाग्भवेत् ॥ ७३ ॥

**एककलत्रयोगाः**

सप्तमे चाष्टमे पापे व्यये भूसूनुसंयुते ।

---

१. अयं श्लोकः सर्वार्थचिन्तामणिगतः । तत्र "कलत्रैकं भवेन्नृणामित्थं ज्ञात्वा जनान् वदेत्" इत्ययं भागो नास्ति । "अदृश्ये यदि नाथे न" इति चास्ति ।

कलत्रैकं भवेन्नृणामित्थं ज्ञात्वा जनान्वदेत् ॥
तादृशे यदि नाथे न कलत्रान्तरभाग्भवेत् ॥ ७४ ॥

दारेशे स्वोच्चराशिस्थे कारके शुभसंयुते ।
लग्ने केन्द्रगते शुक्रे दारमेकं विनिर्दिशेत् ॥ ७५ ॥

कलत्रेशे पञ्चमेशे(श)युते स्वक्षेत्रसंयुते ।
शुभदृष्टे कलत्रैकं लभते नात्र संशयः ॥ ७६ ॥

शुक्रे गुरुयुते वापि सप्तमे शुभसंयुते ।
कलत्रैकं वदेन्नृणामित्थं ज्यौतिषसत्तमः ॥ ७७ ॥

## द्विकलत्रयोगाः

कलत्राधिपतौ पापे शुभे वा शुक्रसंयुते ।
कलत्रद्वययोगं च(गश्च) सम्भवेन्नात्र संशयः ॥ ७८ ॥

चरस्थिते सप्तमेशे पापग्रहसमन्विते ।
तथा वीक्षणयोगेन द्विकलत्री भवेन्नरः ॥ ७९ ॥

चरराशिगते शुक्रे पापग्रहसमन्विते ।
सप्तमांशे बलैर्हीने द्विकलत्रं विनिर्दिशेत् ॥ ८० ॥

स्थिरक्षेत्रगते शुक्रे बुधभानुसमन्विते ।
कलत्राधिपतौ पापे द्विकलत्रं(त्री) भवेन्नरः ॥ ८१ ॥

कलत्रेशे शनियुते राहुसंबन्धगेऽपि वा ।
द्विकलत्रं भवेन्नृणां केरलानां च संमतम् ॥ ८२ ॥

## जीवितकलत्रद्वययोगः

द्वितीयसप्तमाधीशे शुभक्षेत्रे शुभान्विते ।
शुभग्रहेण संदृष्टे कलत्रं जीवितं द्वयम् ॥ ८३ ॥

कलत्रस्थानगे भौमे शुक्रामित्रर्क्षगे शशी(विधौ) ।
लग्नेशे रन्ध्रराशिस्थे कलत्रद्वयभाग्भवेत् ॥ ८४ ॥

त्रिकलत्रयोगाः

लग्ने कुटुम्बे दारे वा पापखेचरसंयुते ।
दारेशे[1] नीचभावस्थे कलत्रत्रयभाग्भवेत् ॥ ८५ ॥

वित्ते पापबहुत्वे तु कलत्रे वा तथाविधे ।
तदीशे पापसंयुक्ते[2] कलत्रत्रयभाग्भवेत् ॥ ८६ ॥

युग्मराशिगते शुक्रे राहुभौमयुतेऽक्षिते ।
कलत्रत्रययोगोऽयं केरलानां परं मतम्(तः) ॥ ८७ ॥

कलत्रस्थानगे शुक्रे कुटुम्बस्थानगे गुरौ ।
तदीशे स्वोच्चराशिस्थे कलत्रत्रयभाग्भवेत् ॥ ८८ ॥

चतुष्कलत्रयोगाः

द्विस्वभावगते शुक्रे कुजराहुयुते यदि ।
वीक्षिते पापखेटैर्वा चतुःकलत्रमादिशेत् ॥ ८९ ॥

पञ्चकलत्रयोगाः

कलत्राधिपतौ लाभे पञ्चमाधिपसंयुते ।
विक्रमाधिपदृष्टे च कलत्रं पञ्चमं विदुः ॥ ९० ॥

कलत्राधिपतौ भाग्ये पञ्चमाधिपसंयुते ।
कलत्राधिपदृष्टे च कलत्रं पञ्चमं विदुः ॥ ९१ ॥

सप्तकलत्रयोगाः

कलत्राधिपतौ सूर्ये स्वक्षेत्रे नीचगेऽपि वा ।
सप्तसंख्यं कलत्रं स्यात्केरलानां परं मतम् ॥ ९२ ॥

बहुकलत्रयोगाः

केन्द्रत्रिकोणे दारेशे स्वोच्चमित्रस्ववर्गगे ।
कर्माधिपेन वा युक्ते बहुस्त्रीसहितो भवेत् ॥ ९३ ॥

---

१. " नीचमूढारौ " इति सर्वार्थचिन्तामणिः ।

२. " पापदृष्टे तु " इति सर्वार्थचिन्तामणिः ।

कलत्रनाथास्फुजिदन्वितर्क्षे युते तु यावत्खचरान्वितश्च ।
उपैति तत्खेचरसंख्यवत्सरात् करग्रहेणैव हि वामलोचना ॥ ९४ ॥

कलत्रनाथ(था)स्फुजिदन्वितग्रहैः तदन्वितर्क्षाधिपसंयुतग्रहाः ।
भवेयुरल्पा यदि तद्ग्रहैस्तदा कलत्रसंख्यासहिते युते खलु ॥ ९५ ॥

दारे(कामे) गुरुसमायुक्ते कारके वा बलान्विते ।
कुटुम्बनाथे मित्रस्थे पत्नीभिः संयुतो भवेत् ॥ ९६ ॥

दारलाभेश्वरौ युक्तौ परस्परनिरीक्षितौ ।
बलाढ्यो(ढ्यौ) वा त्रिकोणस्थौ बहुपत्नीसमन्वितः ॥ ९७ ॥

भाग्येशे दारभावस्थे दारेशे सुखभं गते ।
दारनाथे बलाढ्ये तु केन्द्रे बहुकलत्रभाक् ॥ ९८ ॥

कलत्रेशे बहुगुणे तुङ्गवक्रादिहेतुभिः ।
बहुभार्यं नरं विद्यादुभयर्क्षगतेऽथवा ॥ ९९ ॥

परमोच्चगते मदाधिपे मदराशौ शुभखेचरेण दृष्टे ।
अथवा भृगुनन्दने च तुङ्गे बहुभार्यं प्रवदन्ति बुद्धिमन्तः ॥ १०० ॥

## पितृवर्गगतकलत्रलाभयोगाः

कलत्र(त्रे) कारके वापि पितृकारकसंयुते ।
पितृवर्गकुलोद्भूतं कलत्रं तस्य निर्दिशेत् ॥ १०१ ॥

भानौ सप्तमराशौ वा तदीशे वा दिवाकरे ।
पितृवंशे समुद्भूता तस्य स्त्री भविता तदा ॥ १०२ ॥

## मातृवंशगतपत्नीलाभयोगः

कामे चन्द्रस्य संबन्धे मातृवंशसमुद्भवा ।

## सपत्नीवर्गबन्धुवर्गगतकलत्रलाभयोगः

भौमे सपत्नीवंशोत्था बुधे बन्धुकुलोद्भवा ॥ १०३ ॥

## सद्वंशजातस्य अत्यन्तबन्धुवर्गगतस्य च कलत्रस्य लाभयोगौ

गुरौ वंशवती सा स्याच्छुक्रे चात्यन्तबान्धवा ।

### भृत्यकुलनीचजातिभवकलत्रलाभयोगौ

शनौ भृत्यकुलोत्पन्ना तमसोर्जातिहीनतः ॥ १०४ ॥

### शत्रुवर्गगतकलत्रलाभयोगः

शत्रुकारकसंबन्धे शत्रुवर्गात्कलत्रभाक् ।

### पुनरपि बन्ध्वादिवर्गगतकलत्रलाभयोगाः

बन्धुस्थानादिसंबन्धे तज्जातश्च(तद्वर्ग)कलत्रभाक् ॥ १०५ ॥

### पुनरपि कलत्रान्तरयोगाः

दाराधिपे नेत्रपतिग्रहे च पापान्विते पापनिरीक्षिते वा ।
तद्राशिनाथे(थो) बलहीनकश्च करोति दारान्तरमेव सत्यम् ॥ १०६ ॥

### इति विवाहचिन्ता

## ॥ अथ कलत्रयोगाः ॥

कलत्राधिपतौ नीचे पापर्क्षे पापसंयुते ।
पापग्रहेण सन्दृष्टे कलत्रं नाशयेद्ध्रुवम् ॥ १०७ ॥

कलत्रेशे कुटुम्बेशे शुक्रे वा पापसंयुते ।
पापग्रहेण संदृष्टे कलत्रं नाशयेद्ध्रुवम् ॥ १०८ ॥

सप्तमेशे कुटुम्बेशे राहुकेतुसमन्विते ।
शनैश्वरेण संदृष्टे कलत्रं नाशयन्ति ते ॥ १०९ ॥

कलत्रनाथेऽप्यरिनीचसंस्थे मूढेऽथवा पापनिरीक्षिते वा ।
कलत्रभे पापयुते च दृष्टे कलत्रहानिं प्रवदन्ति सन्तः ॥ ११० ॥

षष्ठाष्टमव्ययस्थे तु मदेशे दुर्बलेऽपि च ।
नीचराशिगते शुक्रे दारनाशं विनिर्दिशेत् ॥ १११ ॥

### एकोनविंशाब्दे दारमरणयोगः

मदेशे नाशराशिस्थे व्ययेशे मदराशिगे ।
वर्षे चैकोनविंशाब्दे दारनाशं विनिर्दिशेत् ॥ ११२ ॥

---

१. दारेश्वरकारकयोरिति शेषः ।

### त्रिदिने सर्पघातमरणयोगः

कुटुम्बस्थानगे राहौ कलत्रे भौमसंयुते ।
पाणिग्रहे च त्रिदिने सर्पघाताद्‌ध्रुवं मृतिः ॥ ११३ ॥

### पुनरपि एकोनविंशाब्दे दारमरणयोगः

रन्ध्रस्थानगते शुक्रे तदीशे दारराशिगे ।
वर्षे चौकोनविंशाब्दे दारनाशं विनिर्दिशेत् ॥ ११४ ॥

### चत्वारिंशाब्दे दारमरणयोगः

लग्नेशे नाशराशिस्थे दू(द्यू)नेशे निधनं गते ।
चत्वारिंशे तु संप्राप्ते कलत्रस्य मृतिर्भवेत् ॥ ११५ ॥

### पत्नीनाशसङ्ख्याज्ञानम्

द्वितीयसप्तमपती पापयुक्तौ यदा तदा ।
भार्याया मरणं वाच्यं तत्र पापस्य संख्यया ॥ ११६ ॥

इति कलत्रनाशचिन्ता

## ॥ अथ पत्नीगणचिन्ता ॥

### सत्कलत्रलाभयोगाः

गुरुणा सहिते दृष्टे दारनाथे बलान्विते ।
शुभग्रहाणां मध्यस्थे सत्कलत्रादिसंभवः ॥ ११७ ॥

कलत्रेशे गुरौ वापि भृगुसौम्यनिरीक्षिते ।
गुरुयुक्ते कलत्रे वा धर्मशीला पतिव्रता ॥ ११८ ॥

दारेशे स्वोच्चराशिस्थे शुभखेचरसंयुते ।
कारके बलसंयुक्ते सत्कलत्रसमन्वितः ॥ ११९ ॥

### दुष्कलत्रयोगाः

कलत्राधिपतौ मोक्षे अष्टमाधिपसंयुते ।
गुरुणा वीक्षिते चात्र भार्या प्रत्युत्तरोद्यमा ॥ १२० ॥

दारेश्वरे वधे पापेऽक्षिते युक्ते तदीक्षिते ।
कुमार्गचारिणी भार्या पापखेटान्तरास्थिते ॥ १२१ ॥

लग्ने पापे तथा कामे कामेशे बलवर्जिते ।
पापग्रहसमायोगे दृष्टे वा दुर्जना भवेत् ॥ १२२ ॥

## कलत्रवर्णाकृतिस्वभावादिज्ञानम्

वर्णाकृती च सौभाग्यं भावनायककारकौ ।
रवौ दाराधिपे स्वस्थे सुभगासौ पतिव्रता ॥ १२३ ॥

भृगुवच्चन्द्रसंबन्धे कुजे क्रूरातिनिष्ठुरा ।
बुधे सोमे च सुभगा स्वस्थे शुभनिरीक्षिते ॥ १२४ ॥

अन्यथा दुर्भगा क्रूरा पापाचारान्यतत्परा ।
पतिव्रता महाभोगा सुभगा गुरुशोभना[2] ॥ १२५ ॥

दयापरा महाभोगा शुक्रे कामातुरा भवेत् ।
भर्तुः प्रिया गुणाढ्या च स्वस्थे सत्यन्यथान्यथा ॥ १२६ ॥

## वन्ध्यायोगाः

लग्नस्थे सप्तसप्तौ दिनमणितनये कामगे चार्कमन्दौ ।
दू(द्यू)ने चन्द्रे नभस्स्थे यदि न च गुरुणाऽलोकिते नो प्रसूते ।
दृश्येऽर्धे मित्रमन्दौ रिपुसदनगतौ ग्लौविदालोकिते(तौ) नो
सूते दुर्ष्ये[3]ज्जलर्क्षे यदि कुजरविजौ गर्भिणी स्यान्न नारी ॥ १२७ ॥

## कलत्राभावयोगः

शुक्रक्षेत्रे कलत्रेशे कुटुम्बे भार्गवे सति ।
तदा जातस्य मुनिभिः कलत्राभावतोऽदिता ॥ १२८ ॥

---

१. " मदे तथा " इति पाठः साधुः ।
२. " शोभना गुरौ " इति पाठः साधुः ।
३. दृश्ये जलर्क्षे इति पाठः साधुः ।

### कलत्रसौख्ययोगाः

सप्तमाधिपतिः(तौ) केन्द्रे कोणे वा स्वगृहे स्थिते ।
लाभे वा शुभसंयुक्ते कलत्रसौख्यमादिशेत् ॥ १२९ ॥

कुटुम्बेशे कलत्रेशे शुक्रे वा शुभसंयुते ।
शुभग्रहेण सन्दृष्टे कलत्रसौख्यमादिशेत् ॥ १३० ॥

कलत्राधिपतौ स्वोच्चे शुक्रे वा स्वोच्चराशिगे ।
कुटुंबेशे तथा स्वोच्चे कलत्रसौख्यमादिशेत् ॥ १३१ ॥

### कलत्रसौख्याभावयोगः

सप्तमाधिपतिः षष्ठे व्यये चाष्टमसंयुते(तः)
कलत्रसौख्यं न लभे(भवे)त्कलत्रं नाशयेद्ध्रुवम् ॥ १३२ ॥

### पुनरपि कलत्रसौख्ययोगः

कलत्रस्थानगे मन्दे तदीशे व्ययराशिगे ।
कारके बलसंयुक्ते दारसौख्यं विनिर्दिशेत् ॥ १३३ ॥

### पुनरपि कलत्रसौख्याभावयोगः

कलत्रस्थानगे भौमे कारकेण च संयुते ।
तदीशे व्ययसंयुक्ते दारसौख्यं न विद्यते ॥ १३४ ॥

### कलत्रस्य व्यभिचारयोगाः

कलत्राधिपतौ लग्ने द्वितीयाधिपसंयुते ।
राहुणा वीक्षिते यत्र कलत्रं जारिणी भवेत् ॥ १३५ ॥

जामित्रे मन्दभौमस्थे(माढ्ये) तदीशे मन्दभौमभे ।
वेश्या वा जारिणी वापि तस्य भार्या न संशयः ॥ १३६ ॥

स्त्रीग्रहः पापसंयुक्तः सप्तमस्थो यदा भवेत् ।
तदा दैवविदा वाच्या भार्या च व्यभिचारिणी ॥ १३७ ॥

एकग्रहे चतुर्थस्थे दारेशे फणिसंयुते ।
पापग्रहेण संदृष्टे जारयोगो न संशयः ॥ १३८ ॥

कुजक्षेत्रगते शुक्रे शुक्रक्षेत्रे च भूमिजे ।
वेश्या वा जारिणी वापि तस्य भार्या न संशयः ॥ १३९ ॥
मन्दक्षेत्रे कुजे शुक्रे मन्देन युतवीक्षिते ।
वेश्या वा जारिणी वापि तद्भार्या कुलटा भवेत् ॥ १४० ॥
दारापतौ मन्दशनेर्गृहे च
शून्यारयुक्तेऽक्षितनारदाराः ।
दारा(भार्या)पतौ पापयुते कुटुम्बे
भौमेन दृष्टो(ष्टे) यदि दा(जा)रजा(दा)रः ॥ १४१ ॥

### कलत्रस्य जातिभ्रंशयोगाः

सप्तमेशयुते भौमे राहुणा च निरीक्षिते ।
भृगुणा संयुते दृष्टे कलत्र(त्रं)भ्रष्टयो(तां)गतः( तम् ) ॥ १४२ ॥
कलत्रगे(गौ) राहुधरासुते(तौ) च( चेत् )
स्वजातिभ्रष्टं(नाशो) न कुलप्रवेशः ।
चन्द्रे गुरौ संयुतवीक्षिते च

### कलत्रस्य सदाचारनिष्ठायोगः

आचारनिष्ठा(ष्ठां) मुनयो वदन्ति ॥ १४३ ॥

इति पत्नीगुणचिन्ता

## ॥ अथ स्तनचिन्ता ॥

### सूर्यादीनां सप्तमस्थित्या कुचलक्षणज्ञानम्

कठिनद्विकुचा भानौ सप्तमे शुभसंयुते ।
पापेक्षिते शशाङ्के तु सप्तमे लम्बनस्तनी ॥ १४४ ॥
अतिकाठिन्यवक्षोजा सप्तमे धरणीसुते ।
बुधे कृशस्तनी कामे मनोज्ञा कोमलान्विता ॥ १४५ ॥
जीवे पीनस्तनी कामे कमलाकृतिसंयुता ।
प्रफुल्लकमलाकारस्तनी कामे भृगौ यदा ॥ १४६ ॥

---

१. अत्र " जायापतौ मन्दकुजालयस्थे शन्यारयोगेऽक्षणगे कुदारः " इति पाठः साधुः ।

अलाबुसदृशाकारस्तनी कामे शनौ यदा ।
घटाकृति[क]वक्षोजा राहु(हौ)केतौ च संयुते ॥ १४७ ॥

**सप्तमस्थरवेः चन्द्रादियोगे स्तनलक्षणज्ञानम्**

कामे रवौ सचन्द्रे च पद्माकारस्तनी भवेत् ।
सभौमे सप्तमे भानौ सा तु तालफलस्तनी ॥ १४८ ॥

तुङ्गोन्नतस्तनी सा स्यात्सबुधे वासरेश्वरे ।
गुरुवत्साहि(शुक्रयु)ते भानौ नारिकेलस्तनी भवेत् । ॥ १४९ ॥

शनिराहू हि(ह्वोश्च) संयोगे भानौ च विकृतस्तनी ।

**सप्तमस्थाने शुभयोगे स्तनलक्षणम्**

सशुभे सप्तमस्थाने पृथुलं च स्तनद्वयम् ॥ १५० ॥

**सप्तमस्थानेशस्य शुभयोगे स्तनलक्षणम्**

अतिस्थूलस्तनी योषा सशुभे दारनायके ।

**सप्तमेशस्य पापयोगे स्तनलक्षणम्**

स्वल्पं लम्बं वामपक्षे दारेशे कुजसंयुते ॥ १५१ ॥

पापेन संयुते वापि स्तन(नं) वै(चा)लक्षणं भवेत् ।

**दारदारेशयोः शुभाशुभयोगेन स्तनलक्षणम्**

दारेशे पापखेटैर्वा सशुभे तादृशः स्तनः ॥ १५२ ॥

शुभे दू(द्यू)नेन सहिते दारेणा(शे)पि तथाविधे ।
समस्तनी भवेत्पत्नी पापयोगेऽतथा भवेत् ॥ १५३ ॥

सप्तमाधिपतौ राहुयुते लम्बस्तनी भवेत् ।
केतौ स्वल्पस्तनी पत्नी बुधयुक्ते समस्तनी ॥ १५४ ॥

दारेशध्वजसंयुतौ बुधरवी स्वल्पस्तनी कामिनी
ताराजे च समस्तनी यदि भवेत्पापेऽथवा वीक्षिते ।
दारेशे सशुभे शुभेक्षितयदि(वति) स्थूलौ कुचौ कर्कशौ
स्थूलं दक्षिणतोऽपि वामत इह न्यूनं च तस्मादनु ॥ १५५ ॥

॥ इति श्रीदैवज्ञाभरणे कलत्रभावविवेचनं नाम पञ्चदशः प्रकाश. समाप्तः ॥
आदितः श्लोकसङ्ख्या १०७०

॥ श्रीः ॥

# ॥ अथ षोडशः प्रकाशः ॥

## ॥ अष्टमभावविवेचनम् ॥

## ॥ अथ जीवनचिन्ता ॥

### सुखजीवनयोगाः

अष्टमे शुभसंयुक्ते तदीशे वा शुभग्रहे ।
शुभग्रहेण संदृष्टे जीवनं सुकरं भवेत् ॥ १ ॥

स्वोच्चराशिगते रन्ध्रे तस्मिंश्च शुभसंयुते ।
पापग्रहविहीने तु जीवनं सुकरं भवेत् ॥ २ ॥

रन्ध्रेशे हर्षसंयुक्ते हर्षेशग्रहसंयुते ।
शुभमध्यगते वापि जीवनं सुकरं भवेत् ॥ ३ ॥

अष्टमे स्वामिसंदृष्टे रन्ध्रेशे च स्वराशिगे ।
मित्रग्रहेण सुलभं जीवनं सुकरं भवेत् ॥ ४ ॥

लग्नेशे कर्मराशिस्थे कर्मेशे लग्नसंयुते ।
तावुभौ केन्द्रगामी(यातौ) चेत्सुखजीवनभाग्भवेत् ॥ ५ ॥

### कुत्सितजीवनयोगाः

अष्टमे पापसंयुक्ते पापग्रहनिरीक्षिते ।
पापमध्यगते वापि जीवनं कुत्सितं भवेत् ॥ ६ ॥

नीचारातिविमूढस्थे रन्ध्रेशे बलवर्जिते ।
पापयोगेऽक्षणवशात्कुत्सितं जीवनं भवेत् ॥ ७ ॥

### रणशौर्यजीवनयोगाः

वाक्पतिस्तु यदि चास्तगतः स्यात्
नीचतो(गो)ऽप्युदयद(क)ष्टनायकः ।

---

१. सहिते इति पाठः साधुः ।

नीचवाक्पतियुतो विलग्नगो
जायते च रणतौर्यजीवितम् ॥ ८ ॥

इति जीवनचिन्ता

## ॥ अथ गुह्यरोगचिन्ता ॥

भगरन्ध्रे गुह्यरोगः कुजो वा रविभानुजौ ।
नीचारान्त्य(त्य)शुभैर्दृष्टे(ष्ट्या) तथापि भवति ध्रुवम् ॥ ९ ॥

### शूलरोगतन्द्रातिसाररोगयोगः

शूलरोगो भवेद्भानौ चन्द्रे तन्द्रातिसारभाक् ।

### पैत्तिकरोगकुक्षिशूलरोगयोगः

कुजे पैत्तिकरोगः स्यात्कुक्षिशूली च तत्र नु ॥ ॥ १० ॥

### मूत्रकृच्छ्ररोगप्रमेहरोगयोगाः

मूत्रकृच्छ्रं भवेत्सौम्ये प्रमेहं वाक्पतावपि ।

### वातस्नायुपीडायोगः

वातस्नायुप्रपीडा च शुक्रे रन्ध्रसमन्विते ॥ ११ ॥

### गुह्ये शस्त्राग्निभययोगाः

शस्त्राग्निभिर्भयं गुह्ये कुजार्किफणिकेतुभिः ।

### गुह्यरोगयोगाः

रन्ध्रे तु पापबाहुल्ये गुह्यरोगं विनिर्दिशेत् ॥ १२ ॥

पापान्विते पापदृष्टे रन्ध्रे गुह्योद्भवां रुजम् ।

### दीर्घगुह्यरोगयोगाः

कथयेन्नियमेनैव नीचादौ दीर्घरोगताम् ॥ १३ ॥

इति गुह्यरोगचिन्ता

## ॥ अथ आयुश्चिन्ता ॥

### स्वल्पमध्यमपूर्णायुर्विभागः

आयुर्योगंत्र(गास्त्र)यः प्रोक्ताः स्वल्पमध्यचिरायुषा ।
द्वात्रिंशत्पूर्वमल्पायुर्मध्यायुश्च ततो भवेत् ॥ १४ ॥

सप्तत्या आशतं पूर्णमायुरत्र वदन्ति हि ।
क्रमेण तं प्रवक्ष्यामि पूर्वशास्त्रानुरूपतः ॥ १५ ॥

### अल्पायुर्योगाः

रन्ध्रेश्वरे पापयुते नरः स्यात् अल्पायुरस्येति वदन्ति षष्ठे ।
तद्राशिलग्नेश्वरयोगजातर(स्या)ल्पायुरस्येति वदन्ति सन्तः ॥ १६ ॥

लग्नेशे व्ययरन्ध्रनाथसहिते रन्ध्रे तृतीयाधिपौ(पे)
पापौ तौ यदि वीक्षि(क्ष)तेऽशुभखगो रन्ध्रेश्वरो देहगः ।
संयुक्तो यदि वर्जितो गुरुदृशा लग्नेशरिष्फारिगः
चन्द्रेऽन्त्याष्टमषष्ठगे च मनुजः स्वल्पायुषा संयुतः ॥ १७ ॥

चतुष्टयगते पापे शुभदृष्टिविवर्जिते ।
बलहीने विलग्नेशे स्वल्पमायुर्विनिर्दिशेत् ॥ १८ ॥

रन्ध्रे रन्ध्रपतिर्बली यदि तदा रन्ध्रेश्वरो दुर्बलो
लग्नेशो बलवर्जितोऽपि च तथा तस्यायुरल्पं वदेत् ।
स्वोच्चे तद्विपरीतमायुरधिकं पश्यन्ति नैसर्गिकं
निर्दिष्टं च पराशरादिमुनिभिर्यत्तद्बलं निर्दिशेत् ॥ १९ ॥

### मध्यायुर्योगाः

बलहीने विलग्नेशे जीवे केन्द्रत्रिकोणगे ।
षष्ठा(ष्ठेऽ)ष्टम(मे) व्यये पापे मध्यमायुरुदाहृतम् ॥ २० ॥

शुभौ केन्द्रत्रिकोणस्थौ शनौ बलसमन्विते ।
षष्ठे वाप्यष्टमे वापि मध्यमायुरुदाहृतम् ॥ २१ ॥

---

१. " तन्नाथो यदि " इति पाठः साधुः ।

भाग्येशे तनुनायकेन सहिते जीवेऽक्षिते पुत्रपे
कर्मेशे यदि केन्द्रगोच्चभवने क्रूरेऽथवा कर्मगे ।
मानेशे सुतनाथसंयुतशनौ लाभेऽथवा मित्रगे
रन्ध्रेशे यदि केन्द्रगे च स·भवेन्मध्यायुषा संयुतः ॥ २२ ॥

### चतुश्चत्वारिंशद्वर्षायुर्योगः

अष्टमाधिपतौ केन्द्रे भौमे लग्नसमाश्रिते ।
एकार्कक(दश)त्रिषष्ठस्थो(स्थे) जीवे द्रू(रु)द्रचतुर्गुणम् ॥ २३ ॥

### पूर्णायुर्योगाः

अष्टमाधिपतौ केन्द्रे कोणे वा स्वगृहस्थिते ।
लाभपे स्वोच्चगे वापि पूर्णायुस्स भवेन्नरः ॥ २४ ॥
रन्ध्रेशे केन्द्रकोणस्थे स्वोचमित्रादिसंयुते ।
लग्नेशेऽपि तथायुक्ते दीर्घमायुर्विनिर्दिशेत् ॥ २५ ॥
रन्ध्राधिपे विलग्नस्थे गुरुशुक्रयुतेऽक्षिते ।
लग्नेशे केन्द्रनाथे वा पूर्णमायुर्विनिर्दिशेत् ॥ २६ ॥
स्वोच्चे स्थिते वा यदि रन्ध्रनाथे शुभान्विते वा शुभदृष्टियुक्ते ।
तत्कारके वा बलपूर्तियुक्ते जातस्य दीर्घायुरुदाहरन्ति ॥ २७ ॥
रन्ध्रेश्वरेणापि युते विलग्ननाथे रिपौ वा व्ययराशियुक्ते ।
अष्टान्त्यपे वा यदि लग्नयुक्ते दीर्घायुरस्येति शुभेऽक्षिते च ॥ २८ ॥
स्वक्षेत्रगे वा यदि रन्ध्रनाथे दीर्घायुरेवं मुनयो वदन्ति ।
मन्देन वा चिन्त्यमशेषमायुर्मित्रर्क्षतत्क्षेत्रगृहस्थितेन ॥ २९ ॥
लग्नेश्वराधिष्ठितराशिनाथो यत्र स्थितस्तद्भवनाधिनाथः ।
त(य)त्र स्थितस्तद्भवनेश्वरश्च केन्द्रस्थितश्चेद्यदि दीर्घमायुः ॥ ३० ॥
लग्नेश्वरे तद्भवनेश्वरे वा चरस्थितेऽप्यत्र तु दीर्घमायुः ।
दिनेश्वरे वा चरराशियुक्ते जातश्चिरं जीवति भाग्ययुक्तः ॥ ३१ ॥

अष्टमेशतृतीयेशौ केन्द्रकोणगतौ यदि ।
लाभे वा नवमे स्वोच्चे दीर्घायुश्च भवेन्नरः ॥ ३२ ॥

तृतीयमानाधिपतौ(ती) केन्द्रे वा सहजे स्थितौ ।
आयुःकारकसंयुक्तौ पूर्णमायुर्विनिर्दिशेत् ॥ ३३ ॥

## ॥ योगायुर्योगः ॥

### रविवशात् अल्पमध्यमपूर्णायुर्योगाः

अल्पायुर्दिवसेशश्च(स्य) शत्रुल(र्ल)ग्नाधिपो यदि ।
समत्वे मध्यमायुः स्यान्मित्रे दीर्घायुरादिशेत ॥ ३४ ॥

### लग्नेशवशात् अल्पायुर्योगः

षष्ठाष्टमव्यये पापे लग्नेशे दुर्बले यदि ।
अल्पायुरनपत्यो वा शुभदृग्योगवर्जिते ॥ ३५ ॥

### पुनरपि पूर्णायुर्योगाः

षट्सप्तरन्ध्रभावेषु शुभेषु सहितेषु च ।
त्रिषडायेषु पापेषु पूर्णमायुर्विनिर्दिशेत् ॥ ३६ ॥

चतुरश्रे शुभैर्युक्ते लग्नेशे शुभसंयुते ।
गुरुणा दृष्टिसंयोगे दीर्घमायुर्विनिर्दिशेत् ॥ ३७ ॥

त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
लग्नेशे बलसंयुक्ते पूर्णमायुर्विनिर्दिशेत् ॥ ३८ ॥

रन्ध्रेश्वराधिष्ठितराशिनाथो यत्र क्व वा तिष्ठति तद्गृहेशः ।
यत्र स्थितस्तद्भवनाधिनाथः परस्परक्षेत्रमुपागतौ चेत् ।
नीरोगदीर्घायुरनेकविद्या(द्यो) नराधिराजो बलवान्सुखी च ॥ ३९ ॥

शनैश्चराधिष्ठितराशिनाथो
यत्र क्व वा तिष्ठति राशि(तस्य)नाथः ।

गौ(ग्लौ)पुत्रदेवेन्द्रगुरुश्च(रू च) यस्य
वेदाष्टग(गौ) श्चे(चे)द्यदि दीर्घमायुः ॥ ४० ॥

लाभशत्रुगताः पापा लग्नेशो यदि केन्द्रगः ।
रन्ध्रस्थाने स्थिताः पापाः कर्मेशः स्वोच्चभ(स)ङ्गतः ॥
योगद्वयेऽपि दीर्घायुरुपैति बहुसंमतम् ॥ ४१ ॥

**केन्द्रादिस्थानवशात् अल्पमध्यमपूर्णायुर्योगाः**

लाभे केन्द्रे त्रिकोणे तनुनिधननभं(भः)स्थानपाः संस्थिताश्चे-
द्दीर्घायुः पापखेटाः फणपरहिबुकत्रिस्थिता मध्यमायुः ।
हीनायुः प्रोक्तमेते यदि जनुषि नृणां स्युस्तदापोक्लिमस्था
रन्ध्रस्थानस्थितानां तनुपतिगगनस्वामिसूर्यात्मजानाम् ॥ ४२ ॥

आयुस्स्थानाधिपो(पे) वा त्रिकरिपुसहिते पापयोगे तु संस्थे
तेनाल्पायुः प्रयुक्तं तनुपतिसहिते जायते क्षीणमायुः ।

**पुनरपि पूर्णायुर्योगाः**

स्वस्थानश्चे(स्थे) च्छु(शु)भं स्याद्भवति च नियतं दीर्घजीवी नरः स्यात् ।
अष्टेशेऽमित्रसंस्थे व्ययनिधनगते देहरन्ध्रे चिरायुः ॥ ४३ ॥

उच्चान्विते त्रि(तैस्त्रि)भिः खेटैर्लग्ने रन्ध्रेशसंयुते ।
रन्ध्रे पापविहीने तु दीर्घमायुर्विनिर्दिशेत् ॥ ४४ ॥

केन्द्रान्विते विलग्नेशे राहुशुक्रसमन्विते ।
ताभ्यां निरीक्षिते वापि दीर्घमायुर्विनिर्दिशेत् ॥ ४५ ॥

लग्नेशे शशिसंयुते शुभखगैर्दृष्टे च रन्ध्राधिपे
षष्ठेशे गुरुसंयुते बलयुते धर्मेशसंवीक्षिते ।
लग्नस्थे सुरपूजिते दशमगे युक्तेऽथवा वीक्षिते
पूर्णायुः पुरुषं वदन्ति मुनयः शास्त्रेषु सत्संमतम् ॥ ४६ ॥

---

१. ग्लौपुत्रो बुधः ।

२. व्ययात् निधनं सप्तमभावः तद्गते इत्यर्थः । देहात् रन्ध्रं अष्टमभावः इत्यर्थः ।

स्वोच्चस्थितेन केनापि खेचरेण समन्विते(ताः) ।
सूर्यसूर्यसुतौ रन्ध्रनाथे(थो) दीर्घायुरादिशेत् ॥ ४७ ॥

इति आयुश्चिन्ता

## ॥ अथ मरणचिन्ता ॥

### चत्वारिंशाब्दमरणयोगाः

अष्टमाधिपतिर्लग्ने चरराशौ च जायते ।
चत्वारिंशे भवेन्मृत्युर्वृद्धाचार्येण संमतम् ॥ ४८ ॥
अष्टमाधिपतिर्लग्ने चरराशौ च जायते यस्तु ।
अब्दे चत्वारिंशे मरणं रन्ध्रे शुभेन संयुक्ते ॥ ४९ ॥

### स्ववासे मरणयोगाः

मृत्युस्थानाधिपे चन्द्रे स्थिरराशिसमन्विते ।
स्ववासे मरणं नृणां इति केरलसंमतम् ॥ ५० ॥
पञ्चमे पञ्चमाधीशो गुरुचन्द्रनिरीक्षिते ।
स्ववासे मरणं नृणां भवत्येव न संशयः ॥ ५१ ॥
मृत्युस्थानाधिपे चन्द्रे स्थिरराशिसमन्विते ।
शनौ वा स्थिरराशिस्थे स्वगृहे मरणं वदेत् ॥ ५२ ॥

### मार्गे मरणयोगाः

चन्द्राष्टमाधिपौ युग्मे शनौ वा तत्र संस्थिते ।
मार्गे मृत्युं वदेन्नृणां केरलानां च संमतम् ॥ ५३ ॥

### दूरमरणयोगाः

चन्द्रे(द्र)रन्ध्राधिपौ युक्तौ चरराशिगतौ यदि ।
शनौ च चरगे नृणां दूरे च मरणं वदेत् ॥ ५४ ॥

## ॥ मरणहेतवः ॥

### स्फोटकमरणयोगः

चरे चन्द्रे मृतिर्दूरे तदीशे चरराशिगे ।
शनौ वा चरराशिस्थे चरांशस्थे तथा भवेत् ॥ ५५ ॥

अष्टमेशे तृतीयेशे(श)युते लग्नगते यदि ।
तथैव कुजसंबन्धे स्फोटके मरणं ध्रुवम् ॥ ५६ ॥

### अग्निदाहमरणयोगाः

तृतीयेशे लग्नगते युते मृत्युगते यदा ।
मरणमग्निदाहेन केरलाचार्यभाषितम् ॥ ५७ ॥

लाभाधिपे शनिक्षेत्रे कुजकेतुयुतेऽक्षिते ।
अग्निदाहे भवेन्मृत्युर्नराणां नात्र संशयः ॥ ५८ ॥

### भङ्गमरणयोगः

कुजक्षेत्रगते सूर्ये सूर्यक्षेत्रगते कुजे ।
शनिक्षेत्रगते राहौ भग्नो मृत्युगतो नरः ॥ ५९ ॥

### जलमरणयोगः

शनैश्चरे रन्ध्रनाथे(थ) युते पापग्रहेऽक्षिते ।
बलहीनेऽपि रात्रीशे जले मृत्युं विनिर्दिशेत् ॥ ६० ॥

### अपस्मारमरणयोगः

अष्टमेशे निशानाथे राहुयुक्ते शनैश्चरे ।
अपस्मारव्याधिमृत्युर्भवत्येव न संशयः ॥ ६१ ॥

### शस्त्रयोगकृतमरणयोगः

देहाधिपे चाष्टमेशे शनिराहुसमन्विते ।
मरणं शस्त्रयोगेषु केरलाचार्यभाषितम् ॥ ६२ ॥

चैन्द्राष्टमाधिपौ युग्मे शनौ वा तत्र संस्थिते ।
मार्गे मृत्युं वदेन्नृणां केरलानां च संमतम् ॥ ६३ ॥

---

१. इमे ६३, ६४, ६५ श्लोकास्त्रयः अस्मिन्नेवाध्याये ५३, ५४, ५५ श्लोकाः पूर्वपठिता एव पुनरावृत्ताः । ५४ श्लोके चन्द्ररन्ध्राधिपौ इत्यस्य स्थाने ६४ श्लोके रन्ध्ररन्ध्राधिपाविति वर्तते ।

रन्ध्ररन्ध्राधिपौ युक्तौ चरराशिगतौ यदि
शनौ चरगते नृणां दूरे च मरणं भवेत् ॥ ६४ ॥
चरे रन्ध्रे मृतिर्दूरे तदीशे चरराशिगे ।
शनौ वा चरराशिस्थे चरांशस्थे तथा भवेत् ॥ ६५ ॥

### अजीर्णमरणयोगाः

लग्नेश्वरे वाहननाथयुक्ते वाणीश्वरेणापि युते त्वजीर्णात् ।
देहेश्वरे वाहनवित्तनाथे य(त)थान्विते वा मरणं त्वजीर्णात् ॥ ६६ ॥

### शैलाग्राभिघातमरणयोगः

सूर्याङ्गारकयोः खे[1]रघुगतयो ग्रावप्रपातो जले

### कूपमरणयोगः

मृत्युर्भूमिभवेन्दुभानुतनयौ(यैः) कूपे खसप्ताम्बुधौ(गैः) ।

### बन्धुमरणयोगः

पापालोकितयोर्हिमोष्णकरयोः कन्यास्थद्वद्ध(स्थयोर्ब)न्धुतो

### जलमज्जनमरणयोगः

[2]लग्ने चेदुभयोः शशाङ्कयमयोस्तोये तथा मन्मतम् ॥ ॥ ६७ ॥

### सन्मरणयोगाः

अष्टमे शुभसंयुक्ते शुभग्रहनिरीक्षिते ।
भाग्याधिपेन संदृष्टे तस्य सन्मरणं भवेत् ॥ ६८ ॥

### योगाभ्यासपूर्वकतीर्थमरणयोगः

निधननिधनपं(पौ) वा जन्मभं जन्मपं वा
शुभखगभवनस्थो यै[3]स्तु बीजं प्रपश्येत् ।

---

१. अत्र " खबन्धुगतयोर्ग्रावाग्रघातोद्भवः " इति पाठः साधुः ।

२. अत्र " स्यातां यद्युभयोदयेऽर्कशशिनौ तोये तदा मज्जनम् " इति वराहमिहिरः । तथा " लग्ने सूर्यशशाङ्कयोस्तिमियुगे तोये तदा मज्जति " इति कल्याणवर्मा ।

३. देवपूज्यः इति पाठः साधुः ।

स भवति चिरजीवी योगयुक्ते(क्तः) सुतीर्थे
विसृजति निजदेहं रामरामेति जल्पन् ॥ ६९ ॥

तीर्थमरणपूर्वकस्वर्गप्राप्तियोगः

कालेन तीर्थराजे मृत्युर्मृत्युपदस्थे सुराचार्ये ।
नीत्वा सुरपतिभवनं दैण्डक्षयं न पश्चात्तु ॥ ७० ॥

॥ इति श्रीदैवज्ञाभरणे अष्टमभावविवेचनं नाम षोडशः प्रकाशः ॥

आदितः श्लोकसङ्ख्या ११४०

---

१. दण्डभरक्षयं इति पाठः साधुः ।

॥ श्रीः ॥

# ॥ अथ सप्तदशः प्रकाशः ॥

## ॥ नवमभावविवेचनम् ॥

## ॥ अथ भाग्यचिन्ता ॥

### सौभाग्ययोगः

नवमाधिपतिः केन्द्रे कोणे लाभे स्थितो यदि ।
स्वोच्चे वा मित्रगे(गो) वापि तदा च(सौ)भाग्यवान्भवेत् ॥ १ ॥

धर्माधिपे पञ्चमेशे पञ्चमे धर्मसंयुते ।
कर्मेशे कर्मसंयुक्ते भाग्यवान्द्रव्यवान्भवेत् ॥ २ ॥

तृतीयाधिपसंयुक्ते धर्मपे सौम्यवीक्षिते ।
प्रबलैश्च(ले च) धनेशे च बहुभाग्ययुतो नरः ॥ ३ ॥

भाग्याधिपे चन्द्रगृहे स्थिते वा शुक्रेऽपि युक्ते बहुकालभाग्यम् ।
आन्दोलिकाभूमिपतीस(श)मानसौभाग्यवान्बन्धुसमेत(भिरेति) सौख्यम् ॥

भाग्याधिपे वाहनेशे(श)युते वा शुभवीक्षिते ।
दीर्घभाग्यं वाहनं च लभते नात्र संशयः ॥ ५ ॥

लग्ने स्थिते भाग्यपतौ कर्मस्थे देहपे यदि ।
तत्र राज्याधिपे दृष्टे महाभाग्यं लभेन्नरः(युतो नरः) ॥ ६ ॥

त्रिकोणाधिपतौ शुक्रे शुभग्रहनिरीक्षिते ।
विलग्ने वी(शेऽ)क्षिते वापि भाग्य(ग्यं) वाहनमादिशेत् ॥ ७ ॥

भाग्यस्थाने चैकशुभस्तदीशे मित्रसंयुते ।
स्वोच्चग्रहेण संदृष्टे बहुभाग्ययुतो नरः ॥ ८ ॥

---

१. राज्येशसन्दृष्टे इति पाठः साधुः ।

धनाधिपेन संदृष्टे भाग्ये सौम्यनिरीक्षिते ।
तदीशे शुभसंदृष्टे बहुभाग्ययुतो नरः ॥ ९ ॥

भाग्याधिपस्थनाथेन वीक्षिते भाग्यनायके ।
कर्मलग्ने(ग्नां)शनाथाभ्यां दृष्टे वा बहुभाग्यभाक् ॥ १० ॥

भाग्याधिपस्थराशी(श्यं)शनाथे केन्द्रत्रिकोणगे ।
शुभग्रहेण संदृष्टे बहुभाग्ययुतो नरः ॥ ११ ॥

कर्मायनाथसंयुक्ते भाग्येशे शुभमध्यगे ।
माने सौम्येन संयुक्ते बहुभाग्ययुतो भवेत् ॥ १२ ॥

भाग्येशकर्मनाथौ च संयुतौ केन्द्रसंस्थितौ ।
भाग्ये शुभग्रहश्चैको भूपालसदृशो भवेत् ॥ १३ ॥

धनाधिपे लाभगते तदीशे भाग्यस्थिते तद्भवनाधिपेऽर्थे ।
कर्माधिपेनापि युते च दृष्टे जातो महाभाग्ययुतो नरः स्यात् ॥ १४ ॥

भाग्याधिपे देहपतौ चतुर्थे चतुर्थपे लाभगते शुभर्क्षे ।
शुभान्विते शोभनखेटदृष्टे जातस्तदानीं बहुभाग्यमेति ॥ १५ ॥

लाभेशे भाग्यराशिस्थे भाग्येशे लग्नमाश्रिते ।
लाभे[1] भाग्येशसंयुक्ते भाग्यप्राप्तिः पुनर्भवेत् ॥ १६ ॥

भाग्येशे राज्यनाथे सुरपतिगुरुणा भार्गवे सोमपुत्रे
केन्द्रस्थाने त्रिकोणे यदि निजभवने भाग्यवान्संप्रसूतः ।
सर्वेषां(र्वासा)मास्पदं स्यान्मनुजपतिभवत्संपदां वाहनेन्द्रो(न्द्रे)
रन्ध्रस्थाने स्थितौ(ते) वा व्रजति हि मनुजो भाग्यराहित्यमेव ॥ १७ ॥

### पितृभाग्ययोगः

लग्नेशे लाभसंयुक्ते भाग्ये भृगुसमन्विते ।
लग्नकेन्द्रगते जीवे पितृभाग्यसमन्वितः ॥ १८ ॥

---

१. "लाभे लग्नेशसंयुक्ते" इति पाठः साधुः ।

पुत्रभाग्ययोगः

पुत्रेश्वरे वा यदि भाग्यराशौ भाग्याधिपेनापि युते च दृष्टे ।
तत्कारके वा यदि पुत्रभावे जातः सुतो(तात्) भाग्यमुपैति वित्तम् ॥

पुनरपि पितृभाग्ययोगः

शैत्रुस्थानाधिपे भाग्ये स्वभाग्यं पितृतो भवेत् ।

अल्पकालभाग्ययोगः

पापक्षेत्रे पापयुते चाल्पकालस्वभाग्यभाक् ॥ २० ॥

शत्रुभाग्ययोगः

भाग्याधिपे शत्रुगते शत्रुभाग्ययुतो नरः ।

सर्वभाग्ययोगः

मित्रस्थे शुभसंदृष्टे सर्वभाग्ययुतो नरः ॥ २१ ॥

ज्ञातिभाग्ययोगः

ज्ञातिस्थानाधिपे भाग्ये भाग्येशे ज्ञातिभं गते ।
ज्ञातिकारकसंबन्धे ज्ञातिभाग्यमुपैति सः ॥ २२ ॥

पुनरपि शत्रुभाग्ययोगः

भाग्याधिपश्च(स्य) शत्रुश्चेच्छत्रुराशिपतिस्तथा ।
तदीशे भाग्यसंबन्धे शत्रुभाग्यमुपैति सः ॥ २३ ॥

पुनरपि बहुभाग्ययोगाः

बन्धौ शुभे वा क्षितिसूनुयुक्ते भूसूनुराशौ यदि वा सुखेशे ।
राज्यार्थसौभाग्ययुतो नरः स्यात् सौम्ये विलग्ने बहुसंप्रयुक्तः ॥ २४ ॥
शङ्खवादित्रघोषाद्यैः संयुते(तो) भाग्यपे सुखे ।
केन्द्रे च कोणभावेऽपि कर्मेशे वाहनान्विते(तः) ॥ २५ ॥
कलत्रगे चन्द्रसिते च जीवे सद्वाहनान्दोलिकराजतुल्यः ।
सहस्रपोषी बहुभाग्ययुक्तः स जीवलोके च चिरं चिरायुः ॥ २६ ॥

---

१. अत्र “ पितृस्थानाधिपे ” इति पाठः साधुः ।

भाग्यहीनत्वयोगः

भाग्याधिपे षष्ठगते चाष्टमे व्ययसंस्थिते ।
भाग्यकर्मविहीनश्च(स्य) ही(दी)नत्वमपि(भि)जायते ॥ २७ ॥

धर्मेशे पापसंयुक्ते नीचे वा सहजे स्थिते ।
धने वा रिपुगे वापि भाग्यहीनो भवेन्नरः ॥ २८ ॥

इति भाग्यचिन्ता

॥ अथ धर्मचिन्ता ॥

चित्तशुद्धिधर्मपरतायोगाः

पितृस्थानेश्वरे सौम्ये कारके शुभसंयुते ।
भावे वा शुभसंयुक्ते सुचित्तो धर्मसंयुतः ॥ २९ ॥

देवतास्थापनयोगाः

भाग्याधिपे शुक्रयुते गुरुसौम्येऽपि(म्यप्र)वीक्षिते ।
देवतास्थापनं धर्मं लभते नात्र संशयः ॥ ३० ॥

अश्वत्थवटस्थापनयोगः

उच्चस्थानस्थिते सौरौ भाग्याधिपसमन्विते ।
अश्वस्थ(त्थं) वटमारोप्य तत्सेवाधर्मतत्परः ॥ ३१ ॥

धर्मज्ञानपरतायोगः

सप्तमाधिपतौ केन्द्रे गुरुशुक्रयुतेक्षिते ।
दीर्घायुर्नृपतुल्यो वा धर्मज्ञानपरो भवेत् ॥ ३२ ॥

तटाकारामस्थापनयोगः

भाग्यराज्याधिपे(पौ) युक्ते(क्तौ) तनुभावेषु संस्थिते(तौ) ।
गुरुदृष्टियुते(तौ) वापि तटाकारामकृद्भवेत् ॥ ३३ ॥

धर्माधिकारयोगः

धर्मेशोऽपि [सितो] गुरुश्च बलवान्धर्माधिकारी तथा ।
स्वोच्चे सूर्यनवांशराशिषु गतो धर्मं सदैवाश्रयेत् ॥ ३४ ॥

महादानपरतायोगाः

दाराधिपेन संदृष्टे लग्ने तन्नायकेऽपि वा ।
तस्मिन्केन्द्रत्रिकोणस्थे महादानपरो भवेत् ॥ ३५ ॥
उच्चस्थे धर्मपे धर्मे शुभसंयुतवीक्षिते ।
लग्नेशे भृगुसंदृष्टे दानकृत्स भवेन्नरः ॥ ३६ ॥
लग्नेशे गुरुसंदृष्टे तथा केन्द्रत्रिकोणगे ।
दाराधिपेन संदृष्टे महादानपरो भवेत् ॥ ३७ ॥
व्ययेशे गुरुसंदृष्टे भाग्यपे वापि वीक्षिते ।
स्वोच्चे ज्ञे लाभपे केन्द्रे महादानपरो भवेत् ॥ ३८ ॥
चतुर्थे दानभावेशे कर्मेशे केन्द्रमाश्रिते ।
व्ययेशे गुरुसंदृष्टे महादानपरो भवेत् ॥ ३९ ॥

दानपरिग्रहयोगः

लग्नेशे लाभराशिस्थे कर्मेशे बलसंयुते ।
दानाधिपेन संदृष्टे दानग्रहणमिष्यते ॥ ४० ॥

इति धर्मचिन्ता

## ॥ पितृदीक्षायोगाः ॥

पित्र्याष्टमे शनिक्षेत्रत्रितये यस्तु जायते ।
स करोति पितुर्दीक्षां पुत्रपौत्रसमन्वितः ॥ ४१ ॥

गुरुभक्तियोगाः

गुरुस्थानेशसंयुक्ते नवांशाधिपतौ यदा ।
गुरुशुक्रेऽक्षिते वापि गुरुभक्तियुतो नरः ॥ ४२ ॥
धर्मे धर्माधिपे जीवे शुक्रेण युतवीक्षिते ।
गुरुभक्तियुतश्चैव गुरुवन्दनमिष्यते ॥ ४३ ॥

### गुरुदारगमनयोगाः

चन्द्रे सपापे यदि चन्द्रराशौ भृगौ(गोः) युते वा यदि दारगामी ।
धर्माधिपे तादृशखेचरेण युते स पापे(पो) गुरुदारगामी ॥ ४४ ॥

### राजपूज्यतायोगाः

भाग्यस्थानाधिपे लग्ने गुरुणा संयुतेऽक्षिते ।
राजवन्द्यो भवेज्जातो भवत्येव न संशयः ॥ ४५ ॥

भाग्याधिपसमायुक्तः सुरमन्त्रिविलोकितः ।
लग्ने वाहननाथश्चेद्राजपूज्यो भवेन्नरः ॥ ४६ ॥

भाग्येशे लाभभावस्थे मित्रक्षेत्रयुतेक्षिते ।
रविसंबन्धगो(गे) वापि राजपूज्यो भवेन्नरः ॥ ४७ ॥

## ॥ अथ पितृचिन्ता ॥

### पितृसौख्ययोगाः

पितृस्थानेश्वरे सौम्ये कारके शुभसंयुते ।
भावे वा शुभसंयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ ४८ ॥

सौम्यान्तरस्थे तन्नाथे गुरुशुक्रबुधेक्षिते ।
एषामेकेन संयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ ४९ ॥

पितृनाथे कारके वा उच्चमित्रस्थितेऽपि वा ।
पितृवृद्धिर्महासौख्यं भवत्येव न संशयः ॥ ५० ॥

### पितृपोषकयोगः

पितृ(तुः) पितृगते राहौ पितृस्थानगते शनौ ।
कारके व्ययराशिस्थे पित्रोरपि च पोषकः ॥ ५१ ॥

### मातृद्वयपितृद्वययोगः

पितृमातृगते राहौ तयोः स्थान(पितृ)गते शनौ ।
कारकौ च द्विराशिस्थौ द्विमाता द्विपिता भवेत् ॥ ५२ ॥

---

१. अत्र "भवे चैवं न संशयः" इति पाठः साधुः ।

कीर्तियुतपितृयोगः

स्वोच्चमूलत्रिकोणस्थे स्वगृहे धर्मगे यदि ।
कीर्तिप्रकाशः(शौ) पितरौ धर्मकर्मादिभिश्चरेत् ॥ ५३ ॥

भाग्यवत्पितृयोगः

सुतेशे[1] धर्मस्वोच्चस्थे धर्मेशे सुतस्वोच्चगे ।
पितरौ भाग्यवन्तश्च केरलानां सुसंमतम् ॥ ५४ ॥

पितृदुःखयोगाः

पापदृष्टे सपापे वा कारके भावनायके ।
पापान्तरगते वापि पितृदुःखं विनिर्दिशेत् ॥ ५५ ॥

यौवने पितृनाशयोगः

भाग्यस्थाने द्वितीये च शशिभौमसमन्विते ।
भाग्येशे नीचराशिस्थे यौवने च पितुर्वधः ॥ ५६ ॥

पञ्चस्त्रीकामुकपितृयोगः

षष्ठमातृपती युक्तौ स्यातां पितृगृहे यदि ।
तत्पिता पञ्चभिस्स्त्रीभिः भोगेच्छां कुरुते सदा ॥ ५७ ॥

सज्जनदारयुतपितृयोगः

लग्नाधिपे पापयुते धनस्थे तदा पिता सज्जनदारयुक्तः ।
सपापकामारिधनाधिपश्च(पे च) कोशस्थिते तातफलं तथैव ॥ ५८ ॥

पितुर्दारिद्र्ययोगः

मातृस्थानात्षडष्टान्ते निशानाथेऽथवा यदि ।
पापेऽक्षिते पापयुक्ते पितुर्दारिद्र्यं भवेत् ॥ ५९ ॥

दीर्घायुष्कपितृयोगाः

भाग्येशे परमोच्चस्थे भाग्येशे जीवसंयुते ।
आज्ञाचतुष्टये शुक्रे पितुर्दीर्घायुरादिशेत् ॥ ६० ॥

---

१. अत्र "सुतेशे स्वोचगे धर्मे धर्मेशे स्वोचगे सुते" इति पाठः साधुः ।

पितृस्थाने शुभयुते कारके बलसंयुते ।
तदीशे शुभसंयुक्ते पितुर्दीर्घायुरादिशेत्  ॥ ६१ ॥

स्वोच्चकेन्द्रत्रिकोणस्थे कारके बलसंयुते ।
भावाधिपे बलयुते पितुरायुष्यमादिशेत्  ॥ ६२ ॥

[1]यथाकारकभावानामन्योन्यसुहृदा यदि ।
शुभेक्षितयुतानां च दीर्घायुष्यं समादिशेत्  ॥ ६३ ॥

भाग्येशे लाभराशिस्थे कर्मेशे लाभसंयुते ।
कारके बलसंयुक्ते पितुरायुष्यमादिशेत्  ॥ ६४ ॥

### पितृवशानुगत्वयोगः

लग्नेशात्पितृभावेशे संपूर्णबलसंयुते ।
कारके वा शुभैर्दृष्टे जातः पितृवशानुगः  ॥ ६५ ॥

पितृजन्माष्टमे जातः पितृशत्रुर्भवेत्सुतः ।
पितृधर्मायवित्तेषु जातः पितृवशो भवेत्  ॥ ६६ ॥

### पितृपुत्रयोरन्योन्यवैरयोगः कुत्सितपितृयोगश्च

भाग्येशे षष्ठराशिस्थे षष्ठेशे भाग्यराशिगे ।
अन्योन्यवैरं भवति जनकः कुत्सितो भवेत्  ॥ ६७ ॥

### पितृसाम्ययोगः

भाग्येशे केन्द्रभावस्थे गुरुणापि निरीक्षते ।
केन्दु(न्द्रे) वाहननाथश्च(थे च) राज्ये वा तत्समं(मः) पिता  ॥ ६८ ॥

### पितृरिष्टहरा योगाः

पितृकारकधर्मेशौ युक्तौ पापसमन्वितौ ।
न जातः पितरं हन्ति केरलानां च संमतम्  ॥ ६९ ॥

---

१. अत्र "पितृकारकभावेशावन्योन्यसुहृदौ यदि। शुभेक्षितयुतौ वापि" इति पाठः साधुः ।

कारके पितृभावेशे नवमे पञ्चमे स्थिते ।
दुस्स्थेश्वर(स्स्थानेश)युते क्रूरे न जातः पितृनाशनः ॥ ७० ॥

जननात् पूर्वं पितृमरणयोगाः

षष्ठा(ष्ठे ऽ)ष्टम(मे) व्यये भानौ रन्ध्रेशे भानुसंयुते ।
व्ययेशे लग्नभावस्थे षष्ठेशे पञ्चमस्थिते ॥
जातस्य जननात्पूर्वं जनकस्य मृतिर्भवेत् ॥ ७१ ॥

पञ्चमाब्दे पितृमरणयोगः

पितृस्थानाधिपे सूर्ये मन्दभौमसमन्विते ।
पञ्चमे वत्सरे प्राप्ते जनकस्य मृतिर्भवेत् ॥ ७२ ॥

सप्तमे एकोनविंशे वा वर्षे पितृमरणयोगः

राहुणा संयुते सूर्ये मदभाग्यगतः शशी ।
सप्तमैकोनविंशाब्दे पितुस्तु मरणं वदेत् ॥ ७३ ॥

अष्टमे पञ्चविंशे वा वर्षे पितृमरणयोगः

भाग्यसप्तमगे सूर्ये वाणसप्तमगे शनौ ।
अष्टमे पञ्चविंशाब्दे पितुर्मरणमादिशेत् ॥ ७४ ॥

त्रिंशे एकविंशे षड्विंशे वा अब्दे पितृमरणयोगः

रन्ध्रजामित्रगे मन्दे मद(न्द)जामित्रगे रवौ ।
त्रिंशैकविंशे षड्विंशे जनकस्य मृतिर्भवेत् ॥ ७५ ॥

त्रयस्त्रिंशे षट्त्रिंशे वा वर्षे पितृमरणयोगः

भाग्येशे नीचराशिस्थे तदीशे भाग्यराशिगे ।
षट्त्रिंशके त्रयस्त्रिंशे पितुर्मरणमादिशेत् ॥ ७६ ॥

चतुश्चत्वारिंशे वर्षे पितृमरणयोगः

भाग्येशे व्ययराशिस्थे व्ययेशे भाग्यसंयुते ।
चतुश्चत्वारिंशद्वर्षे पितुर्मरणमादिशेत् ॥ ७७ ॥

इति पितृचिन्ता

## ।। अथ मातुलचिन्ता ।।

**मातुलवृद्धियोगः**

पितृस्थानेश्वरे केन्द्रे कोणे लाभे शुभैर्युते ।
तथैव षष्ठाधिपतौ मातुलस्यर्द्धिमादिशेत् ॥ ७८ ॥

**चतुःसङ्ख्याकमातुलयोगः**

षष्ठेश्वरे षष्ठगते नवमे शुभसंयुते ।
शुभग्रहेण संदृष्टे वेदसंख्यकमातुलम् ॥ ७९ ॥

**एकमातुलयोगः**

षष्ठेशे केन्द्रराशिस्थे नवमेश्वरसंयुते ।
पापदृष्टे युक्त(ते)मे(चै)कं मातुलं च वदेत्ततः ॥ ८० ॥

**मातुलमरणयोगः**

लग्नात्सुते कर्मणि भूमिपुत्रे पापेक्षिते मातुलमृत्युमाहुः ।

इति मातुलचिन्ता

## ।। पुत्रमरणयोगः ।।

मन्देन युक्ते यदि पुत्रमृत्युं

**मातृमरणयोगः**

चन्द्रे च तन्मातृमृतिं सपापे ॥ ८१ ॥

॥ इति श्रीदैवज्ञाभरणे नवमभावविवेचनं नाम सप्तदशः प्रकाशः ॥

आदितः श्लोकसङ्ख्या १२२१

॥ श्रीः ॥

## ॥ अथाष्टादशः प्रकाशः ॥

### ॥ दशमभावविवेचनम् ॥

कर्मणैव प्रधानानि न ग्रहाः फलदायकाः ।
तस्मादादौ प्रयत्नेन कर्मस्थानं निरूपयेत् ॥ १ ॥

**वित्तलाभयोगः**

कर्मस्थानाधिपे भाग्ये लग्नेशे कर्मसंयुते ।
लग्नात्पञ्चमगे चन्द्रे जातवित्तं विनिर्दिशेत् ॥ २ ॥

### ॥ अथ कीर्तिचिन्ता ॥

**सत्कीर्तियोगाः**

कीर्तिस्थानाधिपे सौम्ये शुभग्रहनिरीक्षिते ।
शुभग्रहसमायोगे कीर्त्याक्रान्तं महीतले ॥ ३ ॥

शुभाः केन्द्रत्रिकोणस्था यदि केन्द्रसमन्विताः ।
शुभग्रहेण संदृष्टे(ष्टाः) कीर्त्याक्रान्तं महीतले ॥ ४ ॥

शशाङ्के कर्मसंयुक्ते गुरुशुक्रनिरीक्षिते ।
परमोच्चादिभाव(ग)स्थे सत्कीर्तिसहितो भवेत् ॥ ५ ॥

**दुष्कीर्तियोगाः**

कर्मेशे नाशराशिस्थे कर्मेशे राहुसंयुते ।
जनद्वेषी महामूर्खो दुष्कीर्तिं लभते नरः ॥ ६ ॥

शत्रुस्थानाधिपे कर्मराशिस्थे भाग्यनायके(कः) ।
षष्ठाष्टमव्ययस्थश्चेद्दुष्कीर्तिं लभते नरः ॥ ७ ॥

---

१. " कर्मस्थानं विना सर्वे " इति पाठः साधुः ।

अपकीर्तियुतो जातः कर्मस्थाने रवौ शनौ ।
पापात्मजे(न्विते) पापदृष्टे पापमध्यगतो(ते)ऽपि चेत् ॥ ८ ॥

दशमे पापसंयुक्ते लग्ने पापसमन्विते ।
दुष्कीर्तिं लभते मर्त्यः स्वजनेन विदूषकः(षितः) ॥ ९ ॥

लग्नकर्मपभाग्येशा बलहीना हि नीचगाः ।
पापान्विताः पापदृष्टास्त्वपकीर्तियुतो भवेत् ॥ १० ॥

राहुकेतुसमायुक्ते वी(मा)ने तन्नायके तथा ।
नीचग्रहेण संदृष्टे दुष्कीर्त्या दूषितो भवेत् ॥ ११ ॥

इति कीर्तिचिन्ता

## ॥ अथ कर्मचिन्ता ॥

### सत्कर्मयोगाः

मी(मा)ने जीवे भृगुसुते लग्नेशे बलसंयुते ।
स्वोच्चराशिगते मन्दे ज्ञानवान्कर्मवान्भवेत् ॥ १२ ॥

कर्मेशे लाभराशिस्थे लग्नेशेन समन्विते ।
केन्द्रत्रिकोणगे चन्द्रे सत्कर्मसहितो भवेत् ॥ १३ ॥

केन्द्रत्रिकोणगे कर्मनाथे स्वर्क्षसमन्विते !
गुरुणा संयुते दृष्टे सत्कर्मसहितो भवेत् ॥ १४ ॥

कर्मेशे लग्नभावस्थे लग्नेशेन समन्विते ।
केन्द्रत्रिकोणगे चन्द्रे सत्कर्मसहितो भवेत् ॥ १५ ॥

### कर्मवैकल्ययोगाः

कर्मस्थानगते मन्दे नीचखेचरसंयुते ।
कर्मेशे पापसंयुक्ते कर्महीनो भवेन्नरः ॥ १६ ॥

कर्माधिपे राहुयुते षष्ठाष्टमव्ययस्थिते ।
वृद्धिकर्म न शक्नोति कर्महीनो भवेन्नरः ॥ १७ ॥

कर्मेशे नीचराशिस्थे कर्मेशे पापखेचरे ।
कर्मात्क(र्मक)र्मस्थिते पापे कर्मवैकल्यमादिशेत् ॥ १८ ॥

पापकर्मयोगाः

कर्मस्थानाधिपे चैव पापग्रहयुतेक्षिते ।
अस्तं गते वा नीचस्थे पापकर्मा च मानवः ॥ १९ ॥

कर्मेशे नीचराशिस्थे रन्ध्रेशे कर्मसंयुते ।
पापग्रहेण संयुक्ते दुष्कर्मनिरतो भवेत् ॥ २० ॥

इति कर्मचिन्ता

## ॥ अथ यज्ञकरा योगाः ॥

कर्मेशवागीशशशाङ्कपुत्राः वीर्यान्विता यज्ञकरा भवन्ति ।
शुभग्रहैर्दृष्टिसमन्वितास्ते विद्यान्वितो(ता) यज्ञविशेषमाहुः ॥ २१ ॥

राज्याधिपे पञ्चमस्थे सत्कर्माधिपसंयुते ।
गुरुणा वीक्षिते य(त)त्र क्रतुयुक्तो भविष्यति ॥ २२ ॥

चन्द्रात्मजे कर्मगते तु भाग्यस्थितेऽथवा पापविवर्जितेऽस्मिन् ।
सौम्येऽक्षिते शोभनभाव(ग)युक्ते यज्ञस्य कर्ता स भवेत्तदानीम् ॥ २३ ॥

कर्माधिपो बली नो चेत्कर्मवैकल्यमादिशेत् ।
बलयुक्तो भवेत्सोऽपि ज्योतिष्टोमादिपुण्यकृत् ॥ २४ ॥

इति यज्ञकरा योगाः

## ॥ अथ गङ्गास्नानयोगाः ॥

कर्मस्थानस्थिते चन्द्रे गङ्गास्नानं लभेन्नरः( भवेद्ध्रुवम् ) ।
अथवा बुधयोगेन यज्ञकर्मादिसिद्धिदः( भाक् ) ॥ २५ ॥

जलर्क्षगे(गौ) पूर्णशशाङ्कजीवे(वौ) मानस्थिते(तौ) गाङ्गजलादिपूतः ।
मानेश्वरे शुक्रग(यु)ते च केन्द्रे स्वोच्चस्थिते तादृशतोयपूतः ॥ २६ ॥

चन्द्रे तृतीये जलराशियुक्ते सौम्येक्षिते तादृशपुण्यभाक्स्यात् ।
माने च मीने यदि वा ससौम्ये भौमान्विते वारिजपुण्ययुक्तः ॥ २७ ॥

सुखेश्वरे केन्द्रगते जन(ल)स्थे सौम्येक्षिते तादृशतोयपूतः ।
व्यये बुधे वा यदि वा तदीशे स्वोच्चान्विते तादृशपुण्यभाक्स्यात् ॥

गङ्गास्नानादिसंसिद्धो लग्ने सौम्यशुभे(युते)क्षिते ।
लग्नेशे मानराशिस्थे माने राहौ तथाविधे ॥ २९ ॥

अथवा तादृश स्नानं करोति रविनन्दने ।
माने देवेज्यसंदृष्टे भृगुणा शशिजेन वा ॥ ३० ॥

राहुर्वा यदि वा चन्द्रः कर्मस्थो यदि जन्मनि ।
गङ्गावगाहन तेन लभ्यते नात्र संशयः ॥ ३१ ॥

इति गङ्गास्नानयोगाः

## ॥ संन्यासयोगाः ॥

केन्द्र(न्द्रे)त्रिकोणे खेटैश्च चतुर्भिः सहकर्मपे(पैः) ।
मु(यु)क्तैश्चैतैः कर्मयुक्तैः प्रव्रज्याऽस्य भवेद्ध्रुवम् ॥ ३२ ॥

न वीक्षितै(त)श्चेदितरैर्ग्रहैश्च लग्नाधिपः पश्यति भानुपुत्रम् ।
लग्नाधिपं वा यदि भानुपुत्रः संन्यासयोगे(गो) हि बलेन युक्तः ॥ ३३ ॥

### ब्रह्मज्ञानयोगः

गुरौ केन्द्रे बलयुते धूमादिग्रहसंयुते ।
बुधारशनिभिर्दृष्टे स्वात्मज्ञानपरो भवेत् ॥ ३४ ॥

### काशीवासयोगः

राज्याधिपे सुकर्मस्थे मोक्षाधिपसमन्विते ।
भृगुणा वीक्षिते यत्र वाराणस्यां निवासतः ॥ ३५ ॥

## ॥ अथ पूर्वजन्मज्ञानम् ॥

### देवलोकागमनज्ञानम्

शुभाश्च पापिनः सर्वे बलिनो लग्नपे शुभे ।
दृश्यमाने यदा जन्म देवलोकादिहागतः ॥ ३६ ॥

पितृलोकागमनज्ञानम्

शनौ केन्द्रे कुजे कामे लग्ने भानौ धने भृगौ ।
पापग्रहान्विते दृष्टे पितृलोकादिहागतः ॥ ३७ ॥

वैकुण्ठागमनज्ञानम्

शनौ भाग्यगते जीवे लग्ने मानेशकोणगे ।
मन्दक्षेत्रे(त्रं) गते शुक्रे वैकुण्ठाज्जायते नरः ॥ ३८ ॥

इति पूर्वजन्मज्ञानम्

## ॥ अथ अभिमानयोगाः ॥

शुभग्रहेण संयुक्ते माने तन्नायकेऽपि वा ।
स्वोच्चे वा स्वगृहे वापि जातो मानी दृढव्रतः ॥ ३९ ॥

कर्माधिपे नेत्रत्रिकोणकेन्द्रेऽभिमानदानी नृपतेः समानः ।
गीतानुरागी मृदुस्वल्पहारी सुखी च नित्यं मुनयो वदन्ति ॥ ४० ॥

तुङ्गराशिं समाश्रित्य कर्मेशे गुरुसंयुते ।
भाग्येशे कर्मराशिस्थे मानैश्वर्यप्रतापवान् ॥ ४१ ॥

इङ्गितज्ञोऽभिमानी स्यान्माने जीवेऽथवा शुभे ।
तदीशे शुभमध्यस्थे शुभसंबन्धगो(गे)ऽपि वा ॥ ४२ ॥

दशमभवनयुक्ते(क्तौ) भौमसूर्ये(र्यौ) मनुष्यो
बहुतरसुखभोगी दानशीलोऽभिमानी ।
मृदुशुचिलघुभुक्तिश्चेत्तदाऽभिन्नराशि(शी)
र्न(न)रपतिगणपूज्योऽशेषकालं च रागी ॥ ४३ ॥

इति अभिमानयोगाः

## ॥ आज्ञायोगाः ॥

आज्ञास्थानाधिपे सौम्ये शुभदृष्टियुतेक्षिते ।
शोभनानुगते वापि जातस्त्वाज्ञापरो भवेत् ॥ ४४ ॥

### क्रूराज्ञायोगाः

आज्ञास्थानगते सूर्ये भूमिपुत्रेऽथवा युते ।
केन्द्रान्विते तदीशो(शे)ऽपि क्रूरामाज्ञां करोति सः ॥ ४५ ॥

राहुमन्दयुते माने रन्ध्रे राहु(हौ) ध्वजेऽपि वा ।
नीचस्थे कर्मभावेशे क्रूरामाज्ञां करोति सः ॥ ४६ ॥

### दासीदाससंभवयोगाः

शुभग्रहेण संदृष्टे कर्मराशौ तदीश्वरे ।
भानुपुत्रेण संयुक्ते बहुदासान्करोति सः ॥ ४७ ॥
षष्ठेशे कर्मराशिस्थे कर्मेशे मन्दसंयुते ।
केन्द्रत्रिकोणगे वापि दासीदासान्विनिर्दिशेत् ॥ ४८ ॥

### सौख्ययोगाः

कर्मेशे बलसंयुक्ते माने गुरुसमाश्रिते ।
वस्त्राभरणसौख्यादीन् लभते नात्र संशयः ॥ ४९ ॥

### नीचवृत्तयोगाः

षष्ठेशे राहुसंयुक्ते व्ययभावगते यदि ।
नीचवृत्तं भवेत्तस्य जातस्य केतुरीदृशम्[1] ॥ ५० ॥

षष्ठेश्वरे रवियुते शत्रुस्थे वाऽन्यवेश्मनि ।
करोति जातः पुरुषो नीचवृत्तिं शिरोव्रणम्(णी) ॥ ५१ ॥

### आजीवभिक्षाटनयोगः

कर्मेशे रिपुरन्ध्ररिप्फभवने स्याज्जी(प्याजी)वभिक्षाटने(नी)

### भोगयोगः महाकीर्त्यादियोगश्च

केन्द्रे कोणगृहेऽथ मित्रभवने स्वोच्चे स्वगेहं गते ।
भोगी तत्र सुकर्मभाग्यसदने भाग्याधिपे संयुते
आन्दोलादिगजाश्ववाहनमहाकीर्तिं नृणां संपदम् ॥ ५२ ॥

---

१. अत्र "केतुयुक्तेऽपि तादृशम्" इति पाठः साधुः ।

## ॥ अथ राजयोगाः ॥

कर्मलग्नाधिनेतारावन्योन्याश्रयसंस्थितौ ।
राजयोगाविति प्रोक्तो(क्तौ) विख्यातो विजयी भवेत् ॥ ५३ ॥
धर्मकर्माधिनेतारावन्योन्याश्रयसंस्थितौ ।
राजयोगाविति प्रोक्तो(क्तौ) विख्यातो विजयी भवेत् ॥ ५४ ॥
कर्मस्थानाधिपे केन्द्रे कोणे लाभे स्थिते यदि ।
धने वा स्वोच्चगे वापि राजयोगं करोति सः ॥ ५५ ॥
धर्म(र्मे)कर्मपुराधीशो(शौ) लग्ने वा पञ्चमेऽपि वा ।
गजवाजिसमाकीर्णराजयोगी भवेन्नरः ॥ ५६ ॥
लग्न(ग्ने) कर्मपुराधीशे लग्नेशे लग्नसंयुते ।
लग्नस्थाने च कर्मे वा(श)युक्ते वा राजयोगकृत् ॥ ५७ ॥
दशमभवननाथे केन्द्रकोणे धनस्थे
बलवति यदि जातो योगसिंहासनोऽयम् ।
स भवति मनुजेन्द्रो विश्वविख्यातकीर्तिः
मदगलितकपोलैः सद्गजैः सेव्यमानः ॥ ५८ ॥

### राजतुल्ययोगाः

दशमैकादशे रिप्फे लग्ने वित्ते सहोत्थमे ।
गृहे तिष्ठति चेत्सौम्ये नृपतुल्यो भवेन्नरः ॥ ५९ ॥
केन्द्रत्रिकोणगाः सौम्याः पापाः षट्लाभसोदराः ।
लग्नाधिपे बलवति नृपतुल्यो भवेन्नरः ॥ ६० ॥
दृश्यते युज्यते वापि चन्द्रजेन बृहस्पतिः ।
शिरसा शासनं तस्य धारयन्ति नृपोत्तमाः ॥ ६१ ॥
निशाकरे केन्द्रगते विलग्ने(ग्नं) त्यक्त्वा त्रिकोणे यदि जीवदृष्टे ।
शुक्रेण युक्ते बलपूर्णयुक्ते जातो नरो भूपतितुल्यभोगी ॥ ६२ ॥
लग्ने गुरौ बुधे केन्द्रे भाग्यनाथेन वीक्षिते ।
भावेशेनाथवा दृष्टे नृपतुल्यो भवेन्नरः ॥ ६३ ॥

सप्तमे जीवसंदृष्टे त्रिकोणे वा समन्विते ।
लग्नाधिपेन संदृष्टे नृपतुल्यो भवेन्नरः ॥ ६४ ॥

राजराजयोगाः

पञ्चमे गुरुसंयुक्ते चन्द्रात्केन्द्रे बृहस्पतिः(तौ) ।
स्थिरलग्ने तदीशे तु राज्ञस्ते(स्स) नृपतिर्भवेत् ॥ ६५ ॥
गुरौ व्यये शनौ लाभे रवौ वा विक्रमाधिपे ।
गुरौ यदि विलग्नस्थे राजराजो भवेन्नरः ॥ ६६ ॥
निशाकरश्च भौमश्च वित्ते वा विक्रमेऽपि वा ।
पञ्चमे राहुसंयुक्ते राजराजो भवेन्नरः ॥ ६७ ॥

राजयोगभङ्गयोगाः

कर्मस्थानाधिपे षष्ठे व्यये चाष्टमसंयुते ।
नीचे वा शत्रुगे वापि राजयोगस्य भङ्गदः ॥ ६८ ॥
कर्मस्थानाधिपे यस्य तृतीये पापसंयुते ।
पापखेचरसंबन्धे राजयोगस्य भङ्गदः ॥ ६९ ॥
धर्मकर्मसमाधीशौ नीचे वा पापसंयुते(तौ) ।
तावुभौ रिपुणा दृष्टौ राजभङ्गस्तदा भवेत् ॥ ७० ॥

इति राजयोगाः

॥ इति श्रीदैवज्ञाभरणे दशमभावविवेचनं नाम अष्टादशः प्रकाशः ॥

आदितः श्लोकसङ्ख्या १२९१

---

॥ श्रीः ॥

# ॥ अथैकोनविंशः प्रकाशः ॥

## ॥ लाभभावविवेचनम् ॥

## ॥ अथ लाभचिन्ता ॥

### बहुलाभयोगाः

लाभस्थानाधिपे यस्य शुभग्रहसमन्विते ।
शुभग्रहेण संदृष्टे बहुलाभमुदीरयेत् ॥ १ ॥

लाभाधिपे(पो) यदा लाभे तिष्ठेत्केन्द्रत्रिकोणयोः ।
बहुलाभं तदा दद्यात्स्वोच्चस्वर्क्षगतोऽपि सन् ॥ २ ॥

लाभेशयुक्तराशीशे शुभग्रहनिरीक्षिते ।
शुभग्रहाणां मध्यस्थे धनलाभमुदीरयेत् ॥ ३ ॥

लाभाधिपे यदा लाभे दृष्टे केन्द्रत्रिकोणपैः ।
बहुलाभं तदा दद्यात्स्वोच्चसूर्यां(स्वर्क्षां)शगो(गे)ऽपि वा ॥ ४ ॥

बुधध्वजौ युक्तहिरण्यलाभं शुक्रान्विते चन्द्रे च मौक्तिकानाम् ।[1]
शनौ रवावायुधनार्जितं च लाभस्थिते खेचरसंभवन्ति ॥ ५ ॥

लाभेशे धनराशिस्थे धनेशे केन्द्रराशिगे ।
गुरुणा संयुते लाभे बहुलाभं विनिर्दिशेत् ॥ ६ ॥

केन्द्रत्रिकोणगे लाभे य(त)था शुभसमन्विते ।
धनभाग्याधिपः(पे) श्रीमान् रत्नाद्याभरणैर्युतः ॥ ७ ॥

---

१. अयं श्लोकोऽतीवाशुद्धः । अतः तत्स्थाने " बुधध्वजाभ्यां बहुहेमलाभः शुक्रेण चन्द्रेण च मौक्तिकानाम् । अन्यैस्तदन्यामित वित्तलाभा लाभस्थितैः खेचरणैर्भवन्ति " इति पाठः कल्पनीयः ।

त्रयस्त्रिंशेऽब्दे भाग्ययोगः

लाभेशे लग्नभावस्थे लग्नेशे लाभसंयुते ।
त्रयस्त्रिंशे तु संप्राप्ते सहस्रनिष्ककं भवेत् ॥ ८ ॥

विवाहात्परं भाग्ययोगाः

द्यूनेशे लाभराशिस्थे लाभेशे द्यूनराशिगे ।
विवाहात्परतश्चैव बहुभाग्यं विनिर्दिशेत् । ॥ ९ ॥

इति लाभचिन्ता

## ॥ अथ धनप्राप्तिहेतुचिन्ता ॥

लाभेशे गुरुसंयुक्ते बहुलाभं विनिर्दिशेत् ।
आयुर्भावे धने सर्वे यद्भाव(यो ग्रह)स्तत्फलं वदेत् ॥ १० ॥

स्ववीर्याद्धनलाभयोगाः

लग्नेशे लाभराशिस्थे शुभग्रहनिरीक्षिते ।
धनायपाभ्यां संदृष्टे स्ववीर्याद्धनमाप्नुयात् ॥ ११ ॥

लग्नेशे नवमे माने स्वोच्चे सुहृदि वा धने ।
लाभाधीशेन संदृष्टे स्ववीर्याद्धनमाप्नुयात् ॥ १२ ॥

भाग्यमानाधिपात्केन्द्रे लग्नेशे कर्मसंयुक्ते(ते) ।
स्वोच्चे वा लाभनाथेन युते वीर्याद्धनागमः ॥ १३ ॥

शत्रुमूलधनागमयोगः

षष्ठेशे दुर्बले वित्तलाभेशाभ्यां निरीक्षिते ।
लग्नेशे गुरुसंदृष्टे शत्रुमूलाद्धनागमः ॥ १४ ॥

दारमूलधनागमयोगः

दारपे केन्द्रकोणस्थे स्वोच्चमित्रस्वगेहगे ।
लग्नेशायपसंदृष्टे दारमूलाद्धनाग्र(ग)तिः ॥ १५ ॥

पितृमातृभ्रातृवर्गमूलधनागमयोगाः

सूर्यश्चेत्पितृवर्गेण चन्द्रश्चेन्मातृवर्गतः ।
कुजश्चेद्भ्रातृवर्गेण पराक्रमधनेश्वरः ॥ १६ ॥

मातुलवर्गविद्यामूलधनागमयोगः

बुध(धो) मातुलवर्गेण जीवो विद्याधनादिमान् ।
आदायमिति विख्यातमिति केरलनिश्चयः ॥ १७ ॥

पितृवर्गयजनदेवमूलधनागमयोगः

गुरुश्चेत्पितृवर्गेण स्वर्णादि स्वार्जितं धनम् ।
यजनादि(दी)ष्टकर्मेण(र्मभ्यो) देवमूलाद्धनप्रदः ॥ १८ ॥

स्त्रीवर्गसंगीतादिमूलधनागमयोगः

शुक्रग्रहे स्त्रीवर्गेण रौप्यमौक्तिकरत्नदः ।
दिव्याभरणकाव्यादिदिव्यसङ्गीतवित्तवान् ॥ १९ ॥

भृत्यवर्गचोरवर्गमूलधनागमयोगाः

शनिश्चेद्भृत्यवर्गेण धान्यादिधनलाभकृत् ।
राहुश्चेच्चोरवर्गेण धनवान्केतुरीदृशम् ॥ २० ॥

कृषिमूलधनागमयोगः

लाभेशे ब(ख)लराशिस्थे केन्द्रे वित्तं कृषि(षे)र्भवेत् ।

इति धनप्राप्तिहेतुचिन्ता

॥ नानाविधधनलाभयोगाः ॥

नानाविधधनाप्तिः स्याल्लाभ(भे)लग्नेशकर्मपाः(पौ) ॥ २१ ॥

ज्येष्ठभ्रातृवृद्धियोगः

लाभेशे शुभसंयुक्ते बलान्वितयुतेक्षिते ।
तत्क्षेत्रे शुभसंयुक्ते ज्येष्ठवृद्धिमुदीरयेत् ॥ २२ ॥

॥ इति श्रीदैवज्ञाभरणे लाभभावविवेचनं नाम एकोनविंशः प्रकाशः ॥

आदितः श्लोकसङ्ख्या १३१३

॥ श्रीः ॥

## ॥ अथ विंशः प्रकाशः ॥

### ॥ व्ययभावविवेचनम् ॥

**देहवैकल्ययोगः**

रव्यारफणिसंयुक्ते व्यये तद्भवनाधिपे ।
दुर्बले पापसंदृष्टे देहवैकल्यमादिशेत् ॥ १ ॥

**तद्भङ्गयोगाः**

हर्षस्थानगते पापे व्यये वा शुभखेचरे ।
पापान्विते यदि तदा न देहे विकलं भवेत् ॥ २ ॥

शुभग्रहान्विते रिप्फे तदीशे शुभसंयुते ।
शुभमध्यगते वापि नास्ति वैकल्यमेव हि ॥ ३ ॥

**सर्वगुणलाभयोगः**

व्ययाधिपे सौम्यव्यये(खगे) शुभस्थे मित्रालये स्वोच्चत्रिकोणकेन्द्रे ।
धर्माधिपे कर्मपतौ यु(सु)तर्क्षे जातो नरः सर्वगुणाकरश्च ॥ ४ ॥

**दारिद्र्ययोगः**

व्ययाधिपे क्रूरव्यये(खगे) सपापे नीचारिगे क्रूरयुते च दृष्टे ।
हासाश्रयः क्रूरगुणो नरश्च दारिद्र्ययुक्तो जनवैरता(भाक्) च ॥ ५ ॥

**बहुदेशाटनयोगाः**

व्ययेशे पापसंयुक्ते व्यये पापसमन्विते ।
पापग्रहेण संदृष्टे देशाद्देशान्तरं गतः ॥ ६ ॥

पापाक्रान्तेऽन्त्यराशीशे नीचग्रहसमन्विते ।
शन्यारफणिसंयोगे बहुदेशाटनं भवेत् ॥ ७ ॥

---

१. सपापे पापक्षेत्रयुते, क्रूरयुते कुरग्रहयुते इत्यर्थः । अतो न पौनरुक्त्यम् ।

अनेकदुर्गविषमदेशाटनपरो भवेत् ।
व्यये तद्राशिनाथाभ्यां(थे च) ग्रहाभ्यां संयुते नरः ॥ ८ ॥

स्वदेशाटनयोगः

व्ययेशे शुभराशिस्थे व्ययर्क्षे शुभराशिगे ।
शुभग्रहेण संदृष्टे स्वदेशेऽखचरो भवेत् ॥ ९ ॥

## ॥ अथ धनव्ययचिन्ता ॥

धर्ममूलधनक्षययोगः

व्ययाधिपसमायुक्ते व्ययभावगते शुभे ।
शुभग्रहेण संदृष्टे धर्ममूलाद्धनव्ययः ॥ १० ॥

लग्नेशे व्ययराशिस्थे व्ययेशे लग्नसंयुते ।
भृगुपुत्रेण संदृष्टे धर्ममूलाद्धनव्ययः ॥ ११ ॥

गुरु(रौ)शुक्रे व्ययस्थाने बुधचन्द्रेण(न्द्रप्र)वीक्षिते ।
शुभभावादिभावस्थे धर्ममूलाद्धनव्ययः ॥ १२ ॥

व्ययस्थाने शुभयुते व्ययभावाधिपे शुभे ।
शुभग्रहेण संदृष्टे धर्ममूलाद्धनव्ययः ॥ १३ ॥

व्ययेशे कर्मराशिस्थे बुधोच्च(च्चे) कर्मसंयुते ।
कर्मेशे बलसंपूर्णे यज्ञमूलाद्धनव्ययः ॥ १४ ॥

व्ययभावाधिपो यस्य शुभदृष्टि(ष्टः) शुभैर्युतः ।
व्ययाधिपश्च बलवान् सद्व्ययं संभवेन्नृणाम् ॥ १५ ॥

व्ययस्थाने च सशुभे व्ययाधीशसमन्विते ।
शुभव्ययसमायोगे(गः) संभवेन्नात्र संशयः ॥ १६ ॥

पापमूलधनक्षययोगाः

व्यये पापसमायुक्ते तदीशे पापखेचरे ।
पापग्रहद्वयोर्मध्ये पापमूलाद्धनव्ययः ॥ १७ ॥

व्याधिपे बलैर्हीने सशुभे व्ययनिश्चयः ।
अनिष्टस्थानसंस्थश्चेदनिष्टव्ययनिश्चयः ॥ १८ ॥

व्ययेशे पापसंयुक्ते तदीशे पापखेचरे ।
धर्ममूलात्ससंभोगो(गः) बहुद्रव्यव्ययो भवेत् ॥ १९ ॥

**धनक्षयहेतवः**

व्ययेशे बलहीनेन यन्नाथेन युतेक्षिते ।
तेन तेन व्ययं यान्ति धनधान्यादिसंपदः ॥ २० ॥

व्ययस्थाने द्विपाद्राशौ द्विपदस्थे च कारके ।
यत्कारकग्रहश्चैव तन्मूलाद्धननाशनम् ॥ २१ ॥

व्ययस्थाने ग्रहास्सर्वे यद्धातुस्तस्य नाशनम् ।
पुरुषः स्त्रीग्रहश्चैव तन्मूलाद्धननाशनम् ॥ २२ ॥

**भ्रातृमूलधनक्षययोगः**

तादृशे व्ययनाथेऽस्मिन् दृष्टे युक्ते यदा भवेत् ।
तथाविधेन भौमेन भ्रातृमूलाद्धनव्ययः ॥ २३ ॥

**स्त्रीमूलधनक्षययोगः**

व्ययेशे चन्द्रसंयुक्ते भृगुणा यदि वीक्षिते ।
नीचे वा नीचसंदृष्टे स्त्रीहेतोर्वित्तनाशनम् ॥ २४ ॥

व्ययाधिपे भृगुयुते नीचे नीचग्रहान्विते ।
रव्यारशनिसंदृष्टे स्त्रीमूलाद्धननाशनम् ॥ २५ ॥

**पुत्रमूलधनक्षययोगः**

व्ययाधिपे गुरुयुते नीचे रव्यारसंयुते ।
मन्देन वीक्षिते वापि पुत्रमूलाद्धनव्ययः ॥ २६ ॥

**बन्धुमूलधनक्षययोगः**

व्ययाधिपे बलयुते नीचभौमार्कवीक्षिते ।
पापराशिगते वापि बन्धुमूलाद्धनव्ययः ॥ २७ ॥

शत्रुमूलधनक्षययोगाः

व्ययाधिपे कुजयुते मन्दार्कसहितेऽपि वा ।
ताभ्यां निरीक्षिते वापि शत्रुमूलाद्धनव्ययः ॥ २८ ॥

व्ययेशे बलसंपूर्णे शत्रुनाथयुतेक्षिते ।
अंशनाथसमायुक्ते शत्रुमूलाद्धनव्ययः ॥ २९ ॥

भृत्यमूलधनक्षययोगः

व्ययाधिपे शनियुते नीचराशौ कुजेक्षिते ।
रव्यारफणिसंयुक्ते भृत्यमूलाद्धनव्ययः ॥ ३० ॥

चोरमूलधनक्षययोगः

व्ययाधिपे राहुयुते मदक्षेत्रगते यदि ।
रविभौमविलोकस्थौ(स्थे) चौ(चो)रमूलाद्धनव्ययः ॥ ३१ ॥

इति धनव्ययचिन्ता

## ॥ अथ लोकप्राप्तिचिन्ता ॥

व्ययाधिपवशात् उत्तममध्यमाधमलोकप्राप्तियोगाः

उच्चस्थे श्रेष्ठलोकं च नीचस्थे नीचमाप्नुयात् ।
समस्थे च समं यान्ति एवमाहुर्महर्षयः ॥ ३२ ॥

पञ्चमस्थग्रहवशात् लोकचिन्ता

यस्य ग्रहस्य यद्भावं(यो भावः) कथितं(तो) भावपञ्चमे ।
संबन्धं(न्धे) तद्ग्रहैर्यत्तु(श्चापि) तल्लोकं(को) जायते नरः ॥ ३३ ॥

जीवलोकप्राप्तियोगः

व्ययाधिपे भृगुयुते राज्याधिपसमन्विते ।
जीवलोकं(को) भवेत्तस्य ह्येष केरलनिश्चयः ॥ ३४ ॥

विष्णुलोकप्राप्तियोगः

मोक्षाधिपे राहुयुते कारकेणापि संयुते ।
विष्णुलोको भवेत्तस्य ह्येष केरलनिश्चयः ॥ ३५ ॥

ब्रह्मलोकप्राप्तियोगः

कर्माधिपे मोक्षयुते भाग्याधिपसमन्विते ।
ब्रह्मलोको भवेत्तस्य ह्येष केरलनिश्चयः ॥ ३६ ॥

मोक्षप्राप्तियोगः

व्ययस्थाने(नं) गते जीवे शुभग्रहनिरीक्षिते ।
तदीशे स्वोच्चराशिस्थे स नरो मोक्षभाग्भवेत् ॥ ३७ ॥

स्वर्गप्राप्तियोगाः

शुभे स्वोच्चे व्यये पापे सौम्यखेचरवीक्षिते ।
परमोच्चादिभाव(ग)स्थे स्वर्गप्राप्तिर्भविष्यति ॥ ३८ ॥

देवेज्ये कर्मराशिस्थे व्ययराशिगतेऽपि वा ।
शुभग्रहेण संदृष्टे स्वर्गप्राप्तिर्भविष्यति ॥ ३९ ॥

स्वर्गनरकप्राप्तियोगौ

व्ययेशे पापमध्यस्थे नरके पतति ध्रुवम् ।
तदीशे शुभमध्यस्थे स्वर्गलोके महीयते ॥ ४० ॥

नरकप्राप्तियोगाः

व्ययेशे पापसंयुक्ते व्यये पापसमन्विते ।
पापग्रहेण संदृष्टे स नरो नरकं गतः ॥ ४१ ॥

व्ययेशे पापसंयुक्ते नीचधूमादिसंयुते ।
दुर्बले पापराशिस्थे नरके पतनं भवेत् ॥ ४२ ॥

व्ययस्थानगते राहौ भौमार्किरविसंयुते ।
तदीशे नीचसंयुक्ते नरके पतति ध्रुवम् ॥ ४३ ॥

इति लोकप्राप्तिचिन्ता

॥ कारागृहवासयोगः ॥

व्ययेशे पापसंयुक्ते पापग्रहनिरीक्षिते ।
नीचस्थानवशा(गता)त्खेटा दि(द्दि)नेशकरपीडिता[ त् ] ।
अतिक्रूरवशाद्दण्डाः(ण्डः) कारागृहनिवासतः ॥ ४४ ॥

एवं द्वादशभावानां फलानां कथितं तु यत् ।
तत्सर्वं योजयेद्धीमान् स्त्रीपुंसोर्जातके सदा ॥ ४५ ॥

॥ इति श्रीदैवज्ञाभरणे व्ययभावविवेचनं नाम विंशतितमः प्रकाशः ॥

आदितः श्लोकसङ्ख्या १३५८

---

॥ श्रीः ॥

## ॥ अथैकविंशः प्रकाशः ॥

### ॥ अथ राजयोगविवेचनम् ॥

निशाभर्ता चायं भृगुतनयदेवेज्यसहितः
कुजः प्राप्तः स्वोच्चं मृगमुखगते सूर्यतनये ।
विलग्ने कन्यायां शिशिरकरसूनुर्यदि भवेत्
तदावश्यं राजा भवति बहुविज्ञानकुशलः ॥ १ ॥

स्वर्क्षे नक्षत्रनाथः स्फुटकरनिकरालङ्कृतैस्तत्तनोर्वा ।
द्यूने सोमस्य पुत्रो यदि रिपुभवनं भास्करः संप्रयाति ।
पाताले दानवेज्ये(ज्यो) गुरुरपि गगने शौ(सौ)रिभौम(मौ)स्तृ(तृ)तीये ।
स्याद्भूपालो भवेद्यः शशिधवलवलच्चामरा राज्यलक्ष्मीः ॥ २ ॥

मृगराशिं परित्यज्य लग्नस्थोऽमरपूजितः ।
करोति पृथिवीपालं मत्तेभपरिवारितम् ॥ ३ ॥

मृगे मन्दा(न्दो) लग्ने कुमुदवनबन्धुश्च तिमिरे(गो)
तथा कन्यां त्यक्त्वा बुधभवनसंस्थः कुतनयः ।
स्थितो नार्यां सौम्यो धनुषि सुरमन्त्री यदि भवेत्
तदा जातो भूपः सुरपतिसमः कीर्तिमहिमा ॥ ४ ॥

शशधरे सधरातनये तनौ भवति यस्य नरस्य समुद्भवः ।
पृथुगुणं समवेहि महीपतिं शतमखं तमखण्डितशासनम् ॥ ५ ॥

---

१. चापे इति जातकसारदीपाभिमतः पाठः ।

२. स्फुटकरनिकरालङ्कृतः प्राप्तलग्नः, इति सारावलीपाठः ।

शुक्रो [1]धटे कुजे(जो) मेषे स्वोच्चे देवपुरोहितः ।
यदि राजा भवेन्नूनं स्वकीर्त्या धौतदिङ्मुखः ॥ ६ ॥

जीवो बुधो भृगुसुतोऽथ निशाकरो वा
धर्मे विशुद्धतनवः स्फुटरश्मिजालम्(लाः) ।
मै(मि)त्रैर्निरीक्षितयुता यदि सूतिकाले
कुर्वन्ति देह(व)सदृशं नृपतिं महान्तम् ॥ ७ ॥

**गोपालस्यापि राज्यप्रदा योगाः**

[2]स्वर्क्षे त्रिकोणे रविरम्बरेऽपि नृराशिसंस्थाः सितजीवचन्द्राः(द्र)[जाः] ।
तृतीयषष्ठोपगताश्च चन्द्रः(द्रात्) कुर्वन्ति गोपालमतिं(पि) क्षितीशम् ॥८॥

[3]कुम्भस्थे रविजे रवावजगते चन्द्रे वृषस्थे तथा
तत्रैवान्तवृषालियुग्महरिगैरारार्किजीवैर्नृपाः ।
तुङ्गस्थे रविजे रवीन्दुसहिते चापे यमे लग्नतो(गे)
भूपा(पो) भौमशनी मृगोदयगतौ स्यादन्यदेशाधिपः ॥ ९ ॥

लग्ने मृगे तत्र शनैश्चरे स्थिते स्वराशिसंस्थो यदि शीतरश्मिः ।
क्रिये नृयुग्मे घ(ध)टमे च संस्था भौमज्ञशुक्राः सकलावनीशः ॥ १० ॥

कुजे [4]तुङ्गे चेन्द्रौ धनुषि यमलग्ने च नृपति-
[पति]र्भु(र्भू)मेश्चान्याः(न्यः) क्षितसुतविलग्ने च[5] शशिनः ।

---

१. घटे, इति सारावलीपाठः । घटे तुलायामित्यर्थः ।

२. अत्र " रविर्नभःस्थः स्वत्रिकोणगोपि वा स्वराशिसंस्थाः सितजीवचन्द्रजाः । तृतीय-षष्ठायगताश्च चन्द्रतः कुर्वन्ति गोपालमपि क्षितीशम् " इति जातकसारदीपाभिमतः पाठः ।

३. अत्र " यमे कुम्भेऽर्केऽजे गवि शशिनि तैरेव तनुगैर्नृयुक्सिंहालिस्थैः शशिजगुरुवक्रैर्नृपतयः " इति वराहमिहिरः । तद्रीत्या " कुम्भस्थे रविजे रवावजगते चन्द्रे वृषस्थे तनौ कुम्भाजवृषगेऽलियुग्महरिगैरारज्ञजीवैर्नृपाः " इति पाठः कल्पनीयः ।

४. " तुङ्गेऽर्केन्द्वोर्धनुषि " इति वराहपाठः ।

५. " सशशिनि " इति वराहमिहिरपाठः ।

सचन्द्रे सौरेऽस्ते सुरपतिगुरौ चापधरगे
स्वतुङ्गस्थे भानामुदयपशुजाते:(मुपयाते) क्षितिपतिः ॥ ११ ॥

कर्मस्थे दिननाथे लग्ने गुरौ भार्गवेऽपि हिबुके वा ।
जामित्रे बुधशशिनौ गजपतियोगी भवेज्जातः ॥ १२ ॥

धने शुक्रश्च भौमश्च माने जीवस्तुले(ला)बुधः ।
नीचश्चन्द्रो रवियुतो राजयोगस्तदा भवेत् ॥ १३ ॥

लग्ने शुक्रो बुधो यस्य केन्द्रे यस्य बृहस्पतिः ।
दशमेऽङ्गारको यस्य स जातः पृथिवीपतिः ॥ १४ ॥

लग्ने चतुर्ग्रहावाप्तिः केन्द्रयुक्तोऽथवा चतुः ।[1]
गुरुर्युक्तश्चतुर्भिर्वा राज्ययोगस्तदा भवेत् ॥ १५ ॥

गुरुचन्द्रौ रवियुतौ बुधोऽपि तत्र संस्थितः ।
लाभे शुक्रः खभे भौमो राजयोगस्तदा भवेत् ॥ १६ ॥

द्वादशस्थो यदा सौरिर्नवमे पञ्चमे गुरुः ।
चतुर्थेऽपि स्थिते चन्द्रे स जातः पृथिवीपतिः ॥ १७ ॥

गुरुभौमौ यदा दृष्टौ गुरुभौमौ युतौ यदि ।
चतुर्थे बुधशुक्रे च राजयोगस्तदा भवेत् ॥ १८ ॥

लग्ने सौरिस्तथा चन्द्रस्त्रिकोणे जीवभास्करौ ।
कर्मस्थाने स्थिते भौमे राजयोगो विधीयते ॥ १९ ॥

लग्ने क्रूरो व्यये क्रूरो धने सौम्यस्तथैव च ।
सप्तमे च भवेत्सोमः स जातः पृथिवीपतिः ॥ २० ॥

### दासकुलजस्यापि राज्यप्रदो योगः

द्वौ द्वौ ग्रहौ स्थितौ यत्र शुभौ वा यदि वाऽशुभौ ।
अपि दासकुले जातः सोऽपि राजा भविष्यति ॥ २१ ॥

---

१. "केन्द्रयुक्तैश्चतुर्ग्रहैः" इति पाठः साधुः ।

दशमेऽङ्गारको यस्य केन्द्र(न्द्रे) कोणे बृहस्पतिः ।
केन्द्रे कोणे स्थिते चन्द्रे राजयोगो विधीयते ॥ २२ ॥

दशमगतमहीजे दाम्भिकः शोकहीनो
रिपुकुलभयकारी कामिनीचित्तहारी ।
जठर(रठ)तनुशरीरो भूमिजो वि(पोऽति)प्रकोपी
द्विजगुरुजनभक्तो नातिदीर्घः कृशाङ्गः ॥ २३ ॥

चरे विलग्ने धनगौ बुधार्कौ
शुक्रे स्वगेहे गुरुधर्मगे वा ।
लग्नाधिपे केन्द्रत्रिकोणगे वा
कर्माधिपः(पे) कोणगतो(ते) नरः स्यात् (रेशः) ॥ २४ ॥

### राज्ञः वैकुण्ठप्राप्तियोगः

लाभस्थानस्थितः सौरिर्वैकुण्ठादागतो नरः ।
मर्त्यलोके महीं भुक्त्वा पुनस्तत्रैव गच्छति ॥ २५ ॥

दुर्लभः कर्कटे जीवः शनिः कुम्भे च दुर्लभः ।
राजपुत्रो भवेद्राजा चान्यो वापि धनेश्वरः ॥ २६ ॥

जन्मेश्वरात्त्रिषष्ठाये पापाः सद्ग्रहवीक्षिताः ।
जनयन्ति महीपालमशेषनृपवन्दितम् ॥ २७ ॥

लग्नेशो व्ययभावस्थे व्ययेशो लाभसंयुते ।
लाभेशो कर्मभावस्थे राजराजो भवेन्नरः ॥ २८ ॥

लग्नभाग्यपकर्मेशाः केन्द्र(न्द्रे)कोणे यदा स्थिताः ।
केन्द्राधिपेन संदृष्टा राजभोगग्रहा मताः ॥ २९ ॥

लग्नेशो धर्मकर्मेवा(र्मस्थे) लग्नेशे सुतराशिगे ।
धर्मकर्मेशयोर्मैत्रे जातो नरपतिर्भवेत् ॥ ३० ॥

लग्नभाग्येशयोर्मैत्रे लग्नभाग्याधिपौ(पो) बली ।
कर्माधिपे बलयुते राजराजो भवेन्नरः ॥ ३१ ॥

केन्द्रकोणाधिपाः केन्द्रे(पाश्चन्द्रः) केन्द्रे कोणे यदा स्थिताः ।
स्वगृहे मित्रगेहस्थे(हे वा) राजयोगस्तदा भवेत् ॥ ३२ ॥

गुरुचन्द्रयुते लग्ने धनस्थाने धनाधिपे ।
राजाधिपे केन्द्रकोणे राजयोगप्रदो भवेत् ॥ ३३ ॥

सिंहे दिनकरे युक्ते कुलीरस्थे निशाकरे ।
जीवोऽपि भार्गवं पश्येद्यदि भूमिपतिर्भवेत् ॥ ३४ ॥

सवितरि ह्यजलग्ने चन्द्रमाः स्थानमेकं(कर्कटस्थः)
सुरगुरुझषलग्ने कर्किलग्ने(संस्थः) शनिर्वा ।
भवति मनुजनाथो दण्डछत्रादिधारी
भवति विपुललक्ष्मी राजसिंहासनस्थः ॥ ३५ ॥

## नृपतुल्ययोगः

लग्ने गुरौ बुधे केन्द्रे भाग्यनाथेन वीक्षिते ।
भा(भ)वेशेनाथवा दृष्टे नृपतुल्यो भवेन्नरः ॥ ३६ ॥

सप्तमे जीवसंयुक्ते त्रिकोणे वा समन्विते ।
लग्नाधिपेन संदृष्टे नृपतुल्यो भवेन्नरः ॥ ३७ ॥

केन्द्रे शनौ त्रिकोणे वा स्वोच्चमूलत्रिकोणभे ।
शय्याधिपेन संदृष्टे नृपमानी भवेन्नरः ॥ ३८ ॥

पूर्वषट्के ग्रहाः सर्वे यस्य तिष्ठन्ति जन्मनि ।
भाग्याधिपे धनस्थे वा सचन्द्रे नृपतिर्भवेत् ॥ ३९ ॥

आरभ्य कर्मभावेशाद्ग्रहास्तिष्ठन्ति चेत्क्रमात् ।
लग्नादिपूर्वषट्केऽस्मिन् राजराजो भवेन्नरः ॥ ४० ॥

निशाकरे केन्द्रगते विलग्ने(ग्नं) त्यक्त्वा त्रिकोणे यदि जीवदृष्टे ।
शुक्रेण युक्ते बलपूर्णयुक्ते जातो नरो भूपतितुल्यभाग्यः ॥ ४१ ॥

नीचस्थिता जन्मनि चेद्ग्रहेन्द्राः तुङ्गे(ङ्गां)शगा राजसमानभाग्यम् ।
उच्चस्थिता नीचनवांशयुक्ताः ग्रहा न कुर्वन्ति तथापि भाग्यम् ॥ ४२ ॥

## नीचभङ्गराजयोगाः

नीचस्थितो जन्मनि यो ग्रहश्च तद्राशिनाथश्च तदुच्चनाथः ।
स चन्द्रलग्नाद्यदि केन्द्रवर्ती राजा भवेद्धार्मिकचक्रवर्ती ॥ ४३ ॥

तुङ्गस्थः शनिरस्तगः शशियुतश्चापस्थिते वाक्पतौ
तीक्ष्णांशौ क्रियगे विलग्नसहिते जातो भवेद्भूपतिः ॥ ४४ ॥

लग्नगे शशिनि तुङ्गसंस्थिते भानुजीवरविपुत्रकैः क्रमात् ।
मित्रदारदशमेषु जायते यो नरः स च भवेद्धराधिपः ॥ ४५ ॥

कार्मुके शशिनि जीवसंयुते भौमयुक्तमृगवक्त्रभे तथा ।
तुङ्गगे भृगुसुतेऽथवा बुधे लग्नगे क्षितिपतिः प्रजायते ॥ ४६ ॥

सजीवे कर्कटे लग्ने लाभे चन्द्रे(न्द)ज्ञभार्गवे(वाः) ।
मेषे युक्ते रवौ विद्याद्भूपतिर्विक्रमान्वितः ॥ ४७ ॥

लग्ने मृगे तत्र शनैश्चरे स्थिते स्वराशिसंस्थो यदि शीतरश्मिः ।
क्रिये नृयुग्मे घ(ध)टभे च संस्था भौमज्ञशुक्राः सकलावनीशः ॥ ४८ ॥

सुखभवनस्थे जीवे रविशनौ विक्रमगो लग्नात्[1] ।
उदयगते रवितनये भूपः स्याल्लाभगैरपरैः ॥ ४९ ॥

रविर्मन्दः शशी जीवः सितार्कजबुधाः क्रमात् ।
लग्नादिकेन्द्रलाभस्था जातो यो नृपतिर्भवेत् ॥ ५० ॥

स्वर्क्षे पातालस्थे भृगुतनये धर्मगे चन्द्रे ।
शेषैस्त्रिषडायस्थैर्जातश्च जनो महीपतिर्भवति ॥ ५१ ॥

---

१. अत्र "सुखे गुरौ तद्रीत्या खे शशितीक्ष्णदीधिती यमोदये लाभगतैर्नृपोऽपरैः" इति वराहमिहिरः। "रविशशिनौ दशमगौ विलग्नर्क्षात्" इति द्वितीयः पादः विपर्यासेन योज्यः ।

अर्कज्ञौ सुखगौ यस्य मन्देन्दु(न्दू) दशमस्थितौ ।
रक्तोदये तथा जातः पृथिवीशो न संशयः ॥ ५२ ॥

द्विग्रहोच्चे(हौच्च्ये) च सामन्तस्त्रिग्रहोच्चे(हौच्च्ये) महीपतिः ।
चतुर्ग्रहोच्चे(हौच्च्ये) साम्राज्यं पञ्चोच्चे(चौच्च्ये) लोकनायकः ॥ ५३ ॥

अश्विन्यां लग्नगः शुक्रः सर्वग्रहसमन्वितः ।
करोति पृथिवीपालं निर्जितारातिमण्डलम् ॥ ५४ ॥

कृत्तिकारेवतीस्वातीपुष्या(ष्य)स्थश्च भृगोः सुतः ।
करोति भूभुजां नाथमश्विन्यामपि संस्थितः ॥ ५५ ॥

पौष्णे फाल्गुन्यां वा मूले पुष्ये च भास्करः कुरुते ।
लग्नगतो नरनाथं योजनशतमात्रके देशे ॥ ५६ ॥

शाखा(राश्या)दौ लग्नपतेः(तिः) करोति लग्ने नरेन्द्रदण्डपतिम् ।
मध्ये च मण्डलपतिं ग्रामपतिं चैव भवनान्ते ॥ ५७ ॥

गैण्डान्तरिष्टिभववैधृतिपातजाताः
क्रूराधिपस्तुदय एव च कृतिकायाम् ।
कीर्तिः कृपाणफलकामृतचण्डवेगाः
प्रस्थापितामितिशिरोगुरिकामिरीशः ॥ ५८ ॥

अश्विन्यनूराधास्थः श्रवणधनिष्ठासु पार्थिवं भौमः ।
स्वोच्चे मुदितो यदि वा वर्गोत्तमगतश्च नान्यत्र ॥ ५९ ॥

लग्नाधिपतिसंयुक्ते त्वेषां लग्ने समुद्भवः ।
तेषां देशं न मुञ्चन्ति न कदाचिदपि श्रियः ॥ ६० ॥

---

१. अत्र "गण्डान्तविष्टिपरिघव्यतिपातजातस्ताराधिपः समुदये यदि कृत्तिकायाः। क्रीडेत्कृपाणफलकाहतचण्डवेगप्रोत्थापिताहितशिरोगुलिकाभिरीशः" इति सारावली-पाठः ।

तुङ्गेशस्थगृहे रविरेको नवमेषु यस्य शुक्रगुरुः(रू) ।
नियतं वा भवति नरो जाराङ्गनासमुद्भवो भूपः ॥ ६१ ॥

॥ इति श्रीदैवज्ञाभरणे राजयोगविवेचनं नाम एकविंशः प्रकाशः ॥

आदितः श्लोकसङ्ख्या १४१९

---

॥ ग्रन्थश्च समाप्तः ॥

---

१. "तुङ्गांशस्वगृहस्थो" इति पाठः साधुः ।